ॐ ह्सौ ॐ दक्षप्रस्फुरवेष्टने । ॐ जूं ॐ वामप्रस्फुरवेष्टने । ॐ सक्लीं ॐ दक्षकक्षमूले । ॐ ऐं ॐ वामकक्षमूले । ॐ ह्सौ ॐ नाभौ । ॐ फ्र ॐ दक्षपाणितले । ॐ फ्रें ॐ वामपाणितले । ॐ सह्रीं ॐ लिङ्गरन्ध्रे । ॐ ह्रौ ॐ लिङ्गमूले । ॐ ह्स्क्लीं ॐ मेहने । ॐ फ्रें ॐ दक्षाण्डे । ॐ सहक्षमलवरयूं ॐ वामाण्डे । ॐ ह्रूं ॐ ब्रह्मसूत्रे । ॐ ह्सफरयूं ॐ गुदे । ॐ हमफ्रें ॐ दक्षगुदफलकसन्धौ । ॐ ह्रौं ॐ वामगुदफलकसन्धौ । ॐ ह्रौं ॐ गुदोर्ध्वे । ॐ ह्सौ ॐ दक्षजानुचक्रे । ॐ हु ॐ वामजानुचक्रे । ॐ ह्उम्रौ ॐ दक्षचक्राध । ॐ हु,क्ष ॐ वामचक्राध । ॐ ह्रै ॐ दक्षगुल्फे । ॐ ग्र ॐ वामगुल्फे । ॐ ह्रक्षफद् ॐ दक्षगुल्फाध । ॐ श्रं ॐ वामगुल्फाध । ॐ नफयरीं ॐ दक्षयमद्वारे । ॐ जरवहरां ॐ वामयमद्वारे । ॐ ह्सू ॐ दक्षपादतले । ॐ हुंफद् ॐ वामपादतले । ॐ वलमहीं ॐ पृष्ठवंशे । ॐ जसहमजू ॐ दक्षपार्श्वे । ॐ क्ष ॐ वामपार्श्वे । ॐ ह्र फद् ॐ दक्षकूर्परे । ॐ सह्रीं ॐ वामकूर्परे । ॐ गलमपल ॐ दक्षमणिबन्धे । ॐ लवरयहम् ॐ वाममणिबन्धे । ॐ ह्सखफ्रें ॐ दक्षांसे । ॐ क्ष फद्रू ॐ वामांसे । ॐ फ्रें ॐ दक्षचूलके । ॐ क्षमयमर ॐ वामचूलके । ॐ हुंफद् ॐ दक्षनेत्रमध्ये । ॐ ह्रींह्सौयर ॐ वामनेत्रमध्ये । ॐ ह्सं ॐ नासिकाग्रे । ॐ हू ॐ दक्षवृद्धतर्जनीमध्ये । ॐ ह्सकलह्रीं ॐ वामवृद्धतर्जनीमध्ये । ॐ श्रकंदूंहसकहलह्रीं ॐ दक्षनासिकायां । ॐ अकचूं सकलह्रीं ॐ वामनासिकाया । ॐ आदिक्षान्तैर्मातृकाक्षरैर्मूर्धादिपादान्तं पुन पादादिमूर्धान्त व्यापक कुर्यात्, इति सकलमातृकया । इति बीजषोढान्यास ॥ अथ पञ्चरत्नन्यास —ॐ ग्लू गगनरत्नगगनपीठगगनलोकवासिन्यम्बागगननाथगगनगर्भगामिनीचतु षष्टिकोटियोगिनी ग्लू ॐ श्रीपा० आज्ञाचक्रे । ॐ स्लूं स्वर्गरत्नस्वर्गपीठस्वर्गलोकगामिन्यम्बास्वर्गनाथस्वर्गलोक(गर्भ)व्यापिनी-द्वात्रिंशत्कोटियोगिनी स्लूं ॐ श्रीपा० विशुद्धौ। ॐ म्लूं मर्त्यरत्नमर्त्यपीठमर्त्यलोकवासिन्यम्बामर्त्यनाथमर्त्यलोकगर्भगामिनी-षोडशकोटियोगिनी म्लूं ॐ श्रीपा० अनाहते । ॐ प्लूं पातालरत्नपातालपीठपाताललोकवासिन्यम्बापातालनाथपाताललोकगर्भगामिनी-अष्टकोटियोगिनी प्लूं ॐ श्रीपा० मणिपूरके । ॐ न्लूं नागरत्ननागपीठनागलोकवासिन्यम्बानागनाथनागलोकगामिनी-चतुष्कोटियोगिनी न्लूं ॐ श्रीपा० स्वाधिष्ठाने ॥ इति रत्नन्यास ॥ अथ परादिन्यास । ॐ ऐं परायै ऐं ॐ अङ्गुष्ठाभ्या नम । ॐ ह्रू इच्छायै ह्रू ॐ तर्जनी० । ॐ ऐं ज्ञानायै ऐं ॐ मध्यमा० । ॐ श्रीं क्रियायै श्रीं ॐ अनामिका० । ॐ ह्रीं कुण्डलिन्यै ह्रीं ॐ कनिष्ठिकाभ्या० । ॐ फ्रें मातृकायै फ्रें ॐ करतलकरपृष्ठाभ्यां नम ॥ एभिरेव षडङ्गन्यासक्रम ॥ ॐ ऐं परायै ऐं ॐ पश्चान्मुखे चूलीमूले । ॐ ह्रूं इच्छायै ह्रू ॐ उत्तरमुखे वामकर्णे । ॐ ऐं ज्ञानायै ऐं ॐ दक्षमुखे दक्षकर्णे । ॐ श्रीं क्रियायै श्रीं ॐ पूर्ववक्त्रे मुखे । ॐ ह्रीं कुण्डलिन्यै ह्रीं ॐ ऊर्ध्ववक्त्रे ललाटे । ॐ फ्रें मातृकायै फ्रें ॐ अंपरवक्त्रे ब्रह्मरन्ध्रे । इति षड्वक्त्रन्यास ॥

इमं न्यासं विधायेत्थ पश्चाद् ध्यानं समाचरेत् । सहस्रसूर्यसङ्काशो महादीप्तिधरो गुरुः ॥ १ ॥
षडन्वयेश्वरः श्रीमान् परशम्भुरजोऽव्ययः । षडाननः स्फुरन्नेत्रैरष्टादशभिरन्वितः ॥ २ ॥
द्वीपिचर्मकटिस्फारो मुण्डमालाविभूषणः । नरास्थिरत्नपारिजातपुष्पमालासमावृतः ॥ ३ ॥
ब्रह्मनाभिकृताङ्गुष्ठो दंष्ट्राविश्रुतलापनैः । विचित्राभरणैर्युक्तः सर्वतः पशुपाशहृत् ॥ ४ ॥

१ 'ह्रे' ग पाठ । २ 'वयरू' ग पाठ । ३ 'चक्रस्थ' । ४ 'चक्रस्थ' ग पाठ । ५ 'जडक्ष' क पाठ । ६ 'ह्रु' ग पाठ. । ७ 'स्लूं' क पाठ । ८ 'अकचूं' ग पुस्तके नास्ति । ९ 'व्यापिन्यम्बा' क पाठ । १० 'निवासिनी' क पाठ । ११ 'ऐं मातृकायै ऐं' क पाठ. । १२ 'परापर' ग पाठ । १३ 'पापन' ग । 'लोपन' क. पाठ ।

शूलासीपुशक्तिसृणिवरधारी महातनुः । कपालफलचापारिपाशाभयकरोद्यतः ॥ ५ ॥
देवावृतः पितृवने क्रीडाकूतमानसोत्तरे । एवं परेश्वरीं ध्यायेत् कन्यागणसमावृताम् ॥ ६ ॥

वामोर्ध्वाद्वामाध पर्यन्तमायुधध्यानम् ।

इति ध्यात्वाभिसञ्जप्य मूलविद्याद्वयं पुनः । समभ्यस्य विशेषार्घ्यं चरणद्वयमान्त्रिनम् ॥ ७ ॥
तेन सन्तर्पयेद् धीमान् स्वाशिरसि गुरुक्रमम् । श्रीनाथपूर्वनिर्वाणचरणं परपावकम् ॥ ८ ॥
कुलकामगवीशुक्लरक्तौ निष्कलरूपकौ । सकलौ च तदात्मानावुपचारपदौ ततः ॥ ९ ॥
सितरक्तैश्च कुसुमैः स्वमूर्ध्नि ब्रह्मरन्ध्रके । सहस्रदलराजीवकर्णिकोदरसंस्थिताः ॥ १० ॥
ब्रह्मादिहेमगर्भान्ताधिष्ठिताः कुलनायिकाः । स्वस्वमन्त्रैर्यजेत् पश्चाद्युगनाथचतुष्टयम् ॥ ११ ॥
निर्वाणचरणध्यानकरणैकपरायणः । चर्यादिमानवौघं च यजेच्च परितः क्रमात् ॥ १२ ॥
तत्रैव हेमगर्भादिप्रेतनाभ्यम्बुजेष्वधः । परेशादिनवेशान्तकूटान्तक्रममादरात् ॥ १३ ॥
सरंस्तत्तत्कूटभवं देवं देवीं समावृतीः । आत्मनैक्यमनुध्यायन् पूजयेदथ साधकः ॥ १४ ॥

इति ॥ तद्यथा—ऐं ह्रीं श्रीं हस्रे श्रीं ह्रीं ऐं श्रीपादुकां पूजयामि तर्पयामि नमः । ५ँ अः हंसः सोहं अ शों सौ ज्योतिष्परम्यानिर्वाणानन्दनाथ सौ शो अः हसः सोहं अ ५ निर्वाणचरणपादुकां पूजयामि० । इति निर्वाणविद्येयं तुरीयातीतस्था ॥ ५ँ ह्यूं हसक्षमलवयरीं हसक्षमलवयरूं हसक्षमलवयरू श्रीपरपावक सर्वाराध्य सर्वगुरनाथ सर्वगुरुगुरुश्रीनाथ गुरनाथ रहसक्षमलवयरूं हसूं हसक्षमलवयरीं हसक्षमलवयरूं सहक्ष मलवयरों एकशम्भु ५ श्रीपरमपावक शम्भु श्रीपा० ॥ श्रीशम्भुगुरु ५ हसक्षमलवयरां हसक्षमलवयरें हसक्षमलवयरीं हसू हसक्षमलवयरू ५ँ ऊँह्रीं कामदुघे अमोघे वरदे विच्चे स्फुर२ श्रां श्रीं श्रूं श्रें श्रौं अः ५ श्रीकामधेनुचरण श्रीपा० ॥ ५ हसूं शुक्लपाद हसूं ५ँ शुक्लनिष्कलपाद श्रीपा० ॥ ५ सहरूं रक्तपाद सहरूं ५ँ रक्तनिष्कलपाद श्रीपा० ॥ इति निष्कलपादौ ॥ ५ हस्रौं शर्वोर्ध्वे वशं देहि हस्रौं ५ शुक्लसकलपाद श्री० । ५ँ सह्रीं सत्ये श्रियं देहि सह्रीं ५ँ रक्तसकलपाद श्रीपा० । इति सकलपादौ ॥ ५ हस्रौं शुक्लविद्यामहापीठशुक्लपुष्पशुक्लमण्डलमहापीठ शुक्लचरक शुक्लार्णवमहापीठ शुक्लनदी शुक्लमन्त्रमहापीठ शुक्लदीपमहापीठ शुक्लमुद्रामहापीठ शुक्लनति शुक्लमहाप्रकाशानन्दनाथपाद हस्रौं ५ शुक्लचरणश्रीपादुकां पू० ॥ ५ँ सहरौं रक्तविद्यामहापीठ रक्तपुष्प रक्तमण्डलमहापीठ रक्तचरक रक्तार्णवमहापीठ रक्तनदी रक्तमन्त्रमहापीठ रक्तदीपमहापीठ रक्तमुद्रामहापीठ रक्तनति श्रीरक्तमहाविमर्शपराम्बापाद सहरौं ५ँ परापररक्तचरणश्रीपा० ॥ ५ हसरौं सहरौं मिश्रविद्यामहापीठ मिश्रपुष्प मिश्रमण्डलमहापीठ मिश्रचरक मिश्रार्णवमहापीठ मिश्रनदीमिश्रमन्त्रमहापीठ मिश्रदीपमहापीठ मिश्रमुद्रामहापीठ मिश्रनति मिश्रमहाप्रकाशविमर्शानन्दनाथपराम्बापाद सह्रौं हस्रौं ५ श्रीपरापरमिश्राम्बाचरणश्रीपा० ॥ ५ लं ब्रह्ममहाप्रेतासनाय लं ५ श्रीपा० । ५ वं विष्णुमहाप्रेतासनाय वं ५ँ श्री० । ५ रं रुद्रमहाप्रेतासनाय रं ५ँ श्री० । ५ँ यं ईश्वरमहाप्रेतासनाय यं ५ श्री० ।

---

१ 'कुलयोगिनि' ग पाठ । २ 'सपूज्य' ख पाठ । ३ 'हस' क. पाठ । ४ 'रा' ग पाठ । ५ 'ह्रा' ग. पाठ । ६ 'हसूरूं' ग पाठ 'सहररूं' क पाठ. । ७ 'शतोर्ध्वे' ख पाठ ।

५ ह्रूं सदाशिवमहाप्रेतासनाय ह्रूं ५ श्री० । ५ ह्रूं हिरण्यगर्भमहाप्रेतपद्मासनाय ह्रूं ५ श्री० । तच्छक्तयः—५ ऐं परायै ऐं ५ श्रीपा० । ५ ह्रुं इच्छायै ह्रुं ५ श्री० । ५ ऐं ज्ञानायै ऐं ५ श्री० । ५ श्रीं क्रियायै श्रीं ५ श्री० । ५ ह्रीं कुण्डलिन्यै ह्रीं ५ श्री० । ५ फ्रें मातृकायै फ्रें ५ श्री० । इति दिव्यौघाः ॥ ५ आं आदिगुरुनाथ आद्याम्बा आ ५ श्रीपा० । ५ अं अचिन्त्यगुरुनाथ अचिन्त्याम्बा अं ५ श्री० । ५ अं अव्यक्तगुरुनाथ अव्यक्ताम्बा अ ५ श्रीपा० । ५ कु कुलेश्वरनाथ कुलेश्वर्यम्बा कुं ५ श्रीपा० । इति युगनाथ चतुष्टय सिद्धौघाः ॥ विन्दुमध्ये । ॐ श्रीचर्यानन्दपूर्णेशानन्दनाथ सिद्धापराम्बा चामुण्डापराम्बा ॐ श्रीपा० । ॐ श्रीचिञ्चिणि मित्रेश कुब्जेशानन्दनाथ मदनापराम्बा ॐ श्री० । ॐ श्रीगगनानन्दनाथ चाण्डलीपराम्बा आ-ह्लीपराम्बा ॐ श्री० । ॐ श्रीचन्द्रगर्भानन्दनाथ भगीयापराम्बा लालीयापराम्बा ॐ श्री० । ॐ श्रीमुक्तानन्द-नाथ महिलापराम्बा ॐ श्री० । ॐ श्रीललितानन्दनाथ शङ्खापराम्बा श्रीकरुणापराम्बा ॐ श्री० । ॐ श्रीक-ण्ठानन्दनाथ श्रीकण्ठापराम्बा ॐ श्री० । ॐ श्रीपरेश्वरानन्दनाथ श्रीपरेश्वरीपराम्बा ॐ श्री० । ॐ श्रीकूर्मा-नन्दनाथ सहजापराम्बा श्रीरत्नदेवीपराम्बा ॐ श्री० । ॐ श्रीरत्नेशानन्दनाथ शान्तीपराम्बा ॐ श्री० । ॐ श्रीध-र्मेशानन्दनाथ सदाख्यापराम्बा अम्बिकापराम्बा ॐ श्री० । ॐ श्रीउमाकान्तेशानन्दनाथ योगापराम्बा योगी-श्वरीपराम्बा ॐ श्री० । ॐ श्रीब्रह्मेशानन्दनाथ यजुरीश्वरीपराम्बा ॐ श्रीपा० । ॐ श्रीभुजङ्गेशानन्दनाथ सह-जापराम्बा ॐ श्री० । ॐ श्रीक्रोधीशानन्दनाथ सहजापराम्बा ॐ श्री० । ॐ श्रीविश्वानन्दनाथ सहजापरा-म्बा ॐ श्री० । ॐ श्रीदिगीश्वरानन्दनाथ सहजापराम्बा श्रीपार्वतीपराम्बा ॐ श्री० । ॐ श्रीसर्वेश्वरानन्दनाथ सह-जापराम्बा ॐ श्री० । ॐ श्रीअनन्तानन्दनाथ सहजापराम्बा ॐ श्री० । ॐ श्रीकपिलेशानन्दनाथ अचलापराम्बा ॐ श्री० । ॐ श्रीएकाम्बरानन्दनाथ सहजापराम्बा ॐ श्री० । ऐं ह्रीं श्रीं ह्सखफ्रें ह्सौः ह्सौः ह्सख्फ्रें सहखफ्रें श्रीअमृतानन्दनाथ सहजापराम्बा ॐ श्रीपा० ॥ इति मानवौघाः ॥ अथ मूलमन्त्रः—५ सहखफ्रें ऐं फ्रें ५ श्रीपरेश्वरानन्दनाथ श्रीपरेश्वरीपराम्बा ॐ श्री० ॥ ५ ह्सं ऐं कुब्जिके फ्रें ह्सम्रईऐं कुब्जिकायै फ्रें ५ श्रीवि-च्चेश्वरानन्दनाथ श्रीविच्चेश्वरीपराम्बा ५ श्री० ॥ ह्सयंईऐं कुब्जिकायै ह्सख्फ्रें विच्चे ५ श्रीहंसेश्वरानन्द-नाथ श्रीहंसेश्वरीपराम्बा ५ श्रीपा० । ५ ह्रां ह्रा ह्रीं ह्रीं ह्स्रां ह्स्रीं ५ ह्स्रुं ह्स्रीं ग्लूं ग्लूं ग्लूं किणि किणि ह्सखफ्रें ह्सखफ्रूं ह्सखफ्रीं विच्चे ह्रां ह्स २ ह्सखफ्रें ह्सक्षमलवयरं श्रां ह्सक्षमलवयरूं श्रां ५ श्रीसंव-र्तकेश्वरानन्दनाथ संवर्तकेश्वरीमहामायापराम्बा ५ श्री० ॥ ५ ह्सूं ऐं रिंगिटि पिंगिटि डुक डुक कण्टा-पि निधे ५ श्रीद्वीपेश्वरानन्दनाथ श्रीद्वीपेश्वरीपराम्बा ५ श्रीपा० ॥ ५ ह्सक्षमलवयर नमो भगवति ह्सखफ्रें कुब्जिकायै ह्रां ह्रू ह्रीं ङञणनमे अघोरमुखि छ्रां छ्रूं छ्रीं किणि २ श्रीविच्चे ५ नवात्मकेश्वरानन्दनाथ श्री-नवात्मकेश्वरीपराम्बा ५ श्री० ॥ इति गुरुक्रमः ॥ अथ मानसरश्मिपूजा—शिरसि षट्कोणे ईशानादिवाय-व्यान्तकोणेषु क्रमशो द्वात्रिंशन्मरश्मिकान् पूजयेत् । ५ ऐं परानन्दनाथ परापराम्बा ऐं ५ श्रीपा० । ५ ऐं भानन्दनाथ भापराम्बा ऐं ५ श्री० । ५ ऐं चिदानन्दनाथ चित्पराम्बा ऐं ५ श्री० । ५ ऐं महा-

१ 'ह्रूं इच्छायै ह्रूं' क पाठ । २ 'परमे' क. पाठ. । ३ 'परमे' क पाठ । ४ 'नी' क पाठ. ।

मायानन्दनाथ महामायापराम्बा पें ऐं श्रीं० ॥ (४) इतीशानकोणे ॥ ऐं हुं इच्छानन्दनाथ इच्छापराम्बा हुं ऐं श्रीं० । ऐं हुं सृष्ट्यानन्दनाथ सृष्टिपराम्बा हुं ऐं श्रीं० । ऐं हुं स्थित्यानन्दनाथ स्थिति-पराम्बा हुं ऐं श्रीं० । ऐं हुं तिरोधानन्दनाथ तिरोधापराम्बा हुं ऐं श्रीं० । ऐं हुं मुक्त्यानन्दनाथ मुक्ति-पराम्बा हुं ऐं श्रीं० ॥ (५) इति पूर्वदिग्भ्रमयः ॥ ऐं पें मानानन्दनाथ मानापराम्बा पें ऐं श्रीं० । ऐं पें सदानन्दनाथ सतीपराम्बा पें ऐं श्रीं० । ऐं पें असदानन्दनाथ असतीपराम्बा पें ऐं श्रीं० । ऐं पें सद-सदानन्दनाथ सदसतीपराम्बा पें ऐं श्रीं० ॥ (४) इत्यग्निकोणे ॥ ऐं श्रीं क्रियानन्दनाथ क्रियापराम्बा श्रीं ऐं श्रीं० । ऐं श्रीं आत्मेश्वरानन्दनाथ आत्मेश्वरीपराम्बा श्रीं ऐं श्रीं० । ऐं श्रीं इन्द्रियानन्दनाथ इन्द्रि-यापराम्बा श्रीं ऐं श्रीं० । ऐं श्रीं गोचरानन्दनाथ गोचरापराम्बा श्रीं ऐं श्रीं० । ऐं श्रीं लोकमुख्यानन्दनाथ लोकमुख्यापराम्बा श्रीं ऐं श्रीं० । ऐं श्रीं वेदानन्दनाथ वेदापराम्बा श्रीं ऐं श्रीं० । ऐं श्रीं सच्चिदानन्दनाथ सच्चित्पराम्बा[1] श्रीं ऐं श्रीं० ॥ (७) इति नैर्ऋत्यकोणे ॥ ऐं ह्रीं कुण्डल्यानन्दनाथ कुण्डलिनीपराम्बा ह्रीं ऐं श्रीं० । ऐं ह्रीं सौषुम्नानन्दनाथ सौषुम्नापराम्बा ह्रीं ऐं श्रीं० । ऐं ह्रीं प्राणसूत्रानन्दनाथ प्राणसूत्राप-राम्बा ह्रीं ऐं श्रीं० । ऐं ह्रीं स्पन्दानन्दनाथ स्पन्दापराम्बा ह्रीं ऐं श्रीं० ॥ (४) इति पश्चिमे ॥ ऐं फ्रें मातृकानन्दनाथ मातृकापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें शब्दानन्दनाथ शब्दापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें वर्णानन्दनाथ वर्णापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें स्वरोद्भवानन्दनाथ स्वरोद्भवापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें वर्णजानन्दनाथ वर्णजापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें वर्गजानन्दनाथ वर्गजापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें संयोगानन्दनाथ संयोगापराम्बा फ्रें ऐं श्रीं० । ऐं फ्रें मन्त्रविग्रहानन्दनाथ मन्त्रविग्रहापराम्बा फ्रें ऐं श्रीं० ॥ (८) इति वायव्यकोणे ॥ अथ रश्मिध्यानम्—

चतुष्कं सूर्यसङ्काशं पञ्चकं चन्द्रसन्निभम् । तृतीयं च चतुष्कं च धूम्राभं सप्तकं पुनः ॥ १ ॥
अञ्जनाभं कुङ्कुमाभं चतुष्कं पञ्चमं पुनः । षष्ठं तथाष्टकं चेति शुद्धवालकसंनिभम् ॥ २ ॥
वरदाभयहस्ताश्च सर्वे वामार्धविग्रहाः । तेजोरूपाश्च वा ध्येयाः केवलं मोक्षकाङ्क्षिभिः ॥ ३ ॥

इति ध्यानम् । इति रश्मि—आवरणम् ।

हिरण्यगर्भनाभिस्थसरसीरुहमध्यतः । कूटं परेश्वरस्याथ चिन्तयेदर्कसंनिभम् ॥ १ ॥
स्वगुरुं मूर्ध्नि संचिन्त्य मूलाधारे परेश्वरीम् । तिथिसंख्याफणोद्भिन्नभोगिमध्यफणे स्थिताम् ॥ २ ॥
तेजोरूपां पुनर्देवीमामस्तकमनुस्मरेत् । परेश्वरेण संयोज्य ध्यायन्नेवं न मान्त्रिकः ॥ ३ ॥
देवं देवीं च संयोज्य पुनरेकीकृतेन च । तन्मन्त्रेण च तावेव त्रिधा संपूज्य साधकः ॥ ४ ॥
नुत्वा स्तुत्वा मनुं जप्त्वा मानमक्रममाचरेत् । .................................. ॥

पुनः स्हौं फ्रों इत्याद्यङ्गन्यासः । "सहस्रसूर्यसङ्काश" इत्यादि ध्यानं, मूलमन्त्रेण यथाशक्ति जपं कुर्यात् । पञ्चाङ्गं नमस्कारं कुर्यात् । "वक्त्रशून्या ह्यदाम्नूना करादृते हरेज्जपम् । कादृते सर्वहानिस्तु मरणं वच-नादृते" ॥ इति लक्षणयुक्त्या नमस्कारं कृत्वा,

---

1 'सच्चिदापराम्बा' क पाठः । २ 'नम्रमानस' ग पाठः ।

नमो द्वादशार्णवक्त्रस्थशशिप्रभवधारिणे । आधारस्वाधिष्ठानादिहृत्कण्ठबिन्दुवासिने ॥ ५ ॥
निजषोडशपर्यन्तचारुसंचारवर्त्मने । जन्मभोगलयव्याधिदुःखकर्मविनाशिने ॥ ६ ॥
भूतवर्तभविष्याख्य-जगज्ज्ञातकथाविदे । षडूर्मिभेदिने सत्ताशून्यवादविनाशिने ॥ ७ ॥
पञ्चत्रिंशत्समंत्रसल्लोके भयचयात्मने । पौनःपुन्यमलोकाख्यमचाविश्वमकात्मने ॥ ८ ॥
वलीपलितनाशैकमूर्तयेऽमृतधारिणे । सर्वज्ञस्फारणोपेतजीवन्मुक्तिप्रदायिने ॥ ९ ॥
इदं गुप्ततमं[1] स्तोत्रं पावनं श्लोकपञ्चकम् । पठेन्नित्यं भुक्तिमुक्ती साधकाय परेश्वरः ॥ १० ॥
संस्तूय मानसे भक्त्या पश्चाद्भूमौ प्रणमेद्भुवि । मघदेवगणैः सार्धं तं मण्डलगतं पुनः ॥ ११ ॥
देवं चरणमध्यस्थं ब्रह्मरन्ध्रे लयं नयेत् । . . . . . . . . . . . . . ॥

इति मानसगुरुक्रम ॥ तदनन्तर गुरुक्रमे शिरसि विन्यस्य, सर्वतीर्थानि समुद्रसहितानि तीर्थमन्त्रेणाङ्कुशमुद्रयाकृष्य तस्मिन्नावाह्य तज्जले धेनुमुद्रां प्रदर्श्य, सस्तृतेनाभ्युक्ष्य तज्जलेनात्मानं पूजोपकरणानि च संप्रोक्ष्य सामान्यार्घ्यमाच्छादयेत् । "भूताङ्गुलं च वेदास्र षट्कोणं चोर्ध्वरेखकम् । विलिख्य तस्मिन् साधार पात्रमस्त्रविशोधितम् ॥ संस्थाप्य पयसापूर्याधारपात्रजलेषु च ।" ऐं र वह्निमण्डलाय धर्मप्रददशकलात्मने सामान्यार्घ्यपात्रासनाय नमः । ऐं हं सूर्यमण्डलाय वसुप्रदद्वादशकलात्मने सामान्यार्घ्यपात्राय नमः । ऐं सं सोममण्डलाय मोक्षप्रदषोडशकलात्मने सामान्यार्घ्यामृताय नमः । ऐं श्रीविद्याखण्डत्रयेण त्रिरभिपूज्य परेश्वरेण त्रिवार संपूज्य परेश्वर्या सप्तवारमभिमन्त्र्य गन्धपुष्पाक्षतैरभ्यर्च्य, इति सामान्यार्घ्यविधि ॥ तद्दक्षिणे पात्रं प्रतिष्ठाप्य तदनु पञ्चभिर्वाक्षिण्यादिभि कृतोत्पवनं कृत्वा घटसूत्रपठनं "समुद्रे मथ्यमाने तु" इत्यादि पठन् सामान्यार्घ्यघटं दर्शयेत् । तद्बिन्दुं सामान्यार्घ्ये निक्षिप्यात्मानं पूजोपकरणानि संप्रोक्ष्य मण्डलोद्धारण कुर्यात् ।

चतुरस्रमर्धचन्द्रं त्र्यस्रं षट्कोणवृत्तके । त्र्यस्रं पुनश्चन्द्रखण्ड नादबिन्दुनवात्मकम् ॥ १ ॥
श्रीभैरवीविशेषार्घ्यमण्डलानां यथा भवेत् । अवकाशस्तथा साधु लिखेदेतन्नवात्मकम् ॥ २ ॥
शाम्भवागमपूजार्थं तयोर्ध्वे मण्डलं लिखेत् । तस्मिन् प्रागादिदिङ्मध्ये ऊर्ध्वदेशे गुरूक्तितः ॥ ३ ॥
आद्यन्तप्रणवैर्युक्त्वा बीजषट्कं क्रमात् पठेत् । लंवंरंयंहंसमित्यादि चतुरस्रार्धचन्द्रकम् ॥ ४ ॥
त्रिकोणमथ षट्कोणं वृत्तं नादं बहिः पुनः । पञ्चप्रणवमुच्चार्य वृत्तत्रयमथो लिखेत् ॥ ५ ॥
श्रीभैरवमपर्यार्थं पद्मस्याधो निचक्षणः । अथ भूजानुको भूत्वा षोडशाङ्गुलमानतः ॥ ६ ॥
चतुर्विंशाङ्गुलं वाथ द्वादशाङ्गुलमेव च । चतुरस्रं समालिख्य मध्ये पट्टं विधाय च ॥ ७ ॥
राजतं स्वर्णमन्यद्वा तत्राष्टदलमालिखेत् । पद्मं वृत्तत्रयोपेतं तन्मध्ये मण्डलत्रयम् ॥ ८ ॥
कर्पूरचन्दनादीनि कस्तूरीकुङ्कुमादयः । मान्दश्लक्ष्णेन पङ्केन हेमपट्टादि लेखयेत् ॥ ९ ॥
प्रकृत्यष्टदलमन्यत्रं परप्रकृतिकर्णिकम् । पुण्डरीकवर सम्यक् सूच्या सौवर्णया लिखेत् ॥ १० ॥
हेमपट्टाद्यभावे तु वस्त्रोपर्यथवा भुवि । पद्मस्याधःप्रदेशे तु सामान्यार्घ्यस्य वा पुनः ॥ ११ ॥

[1] 'वामत' स पाठ ।

सामान्यवद्विशेषार्घ्यमण्डलं विलिखेद्बुधः । पद्मस्य पार्श्वयोः सौम्ययाम्ययोर्मण्डलद्वयम् ॥ १२ ॥
वेदाङ्गुलप्रमाणं सालिखेत् प्राक्प्रत्यगायतम् । त्रयाणां द्वारपालानां गुरूणां पञ्चकस्य तु ॥ १३ ॥
क्रमात् सौम्ये च याम्ये च पञ्चमस्थानकल्पना । द्वारपालोत्तरे कुर्याद् वलीनां मण्डलानि च ॥ १४ ॥
अथ पुष्पाचर्तः साध्यैर्विशेषार्घ्यस्य पूजनम् । कृत्वा सामान्यवत् पात्रस्थापनान्तं विधाय च ॥ १५ ॥
सद्वितीयं विधानेन संपूज्यापूर्य पूर्ववत् । आबध्य कमठीमुद्रां कुसुमाक्षतगर्भिताम् ॥ १६ ॥
मूलकुण्डलिमुत्थाप्य उद्यचन्द्रसमप्रभाम् । षट्चक्रमण्डलं भित्त्वा सुषुम्नाकाशगामिनीम् ॥ १७ ॥
सोमसूर्यपदं भित्त्वा विश्रान्तां शाम्भवेन तु । ध्यात्वा समरसोद्भूतमिश्ररङ्गमितामृतैः ॥ १८ ॥
चरणत्रयसंभूतैर्नयनद्वयनिर्गतैः । आपूरितं विशेषार्घ्यममृतीकृत्य वीक्षणैः ॥ १९ ॥
ज्वलदग्निनिभं ध्यात्वा धेनुमुद्रां प्रदर्शयेत् । ........................................ ॥

"ब्रह्माण्डखण्डसंभूतमित्यादि पठन् "मयिविस्फुरणं कुरु" इति संप्रार्थ्यैवं वक्ष्यमाणमन्त्रैरपि समर्चयेत् । ऐं ह्सरौं ह्सर अमृतेशोद्भवाय ह्र ह्सरौं, ऐं ऐं परामृतेशोद्भवायै ऐं, ऐं श्रोंजूंस अमृतेशभैरवाय स जूं ॐ अमृतेशभैरव्यै ॐजूंस. ऐं ह्सक्षमलवयरं यं सहक्षमलवयरीं यीं सुरादेव्यै अर्धनारीश्वर्यै वौषट् ऐं । ऐं सहक्षमलवरयईं ह्सक्षमलवरयऊं अंसंप आनन्दभैरवानन्दनाथ नवात्मकापराम्बा ऐं श्रीपा० । आवाहनादिमुद्राः प्रदर्श्य, अकथादि पात्रमध्ये संचिन्त्य, त्रिकोणे षोडशस्वरान् विचिन्त्य, कोणेषु पीठमन्त्रैः संपूज्य मूलविद्यानित्याषोडशकं विचिन्त्य विन्यस्य, श्रीविद्यागुरुक्रमन्त्रं विन्यस्य, ऐं अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय श्रींश्रींश्रूं अमृते अमृतेश्वर्यै नमः ऐं । इत्यमृतेश्वरीं त्रिवारं पठित्वा, ऐं आनन्दभैरवाय वषट् ऐं, इति संशोध्य, ततो गुरुमन्त्र । असिताद्याद्यष्टौ पात्राञ्जले संपूज्य नवात्मकविद्याभ्यां त्रिः सन्तर्पयेत् । परेश्वरेण त्रिवारं परेश्वर्या सप्तवारमभिमन्त्र्याङ्गानि देव्योर्विन्यस्य रक्तामन्त्रेण संकल्पयेत् । सौभाग्यविद्या श्रीमूर्त्यादिविद्या निर्वाणविद्या । ऐं हंस सोऽहं श्रों ह्रां ह्रीं सौः निर्वाणानन्दनाथ अहंस्वात्मप्रकाशानन्दनाथ ऐं श्रीपा० । तथा सप्तघोच्चारात् । इति श्रीमूर्तिविधिः ॥ विशेषार्घ्यस्य तादात्म्यं भावयित्वा पञ्चोपचारान् परिकल्प्य विशेषदक्षिणे मण्डले चतुरस्रके भोगपात्राधारकं फ्रेमिति संस्थाप्य, तत्र पात्रं क्लीमिति निक्षिप्य, आद्येन सौरित्यापूर्य, विशेषोदकेन संस्कृत्य श्रीनाथादिपरापादुकान्तं शिरसि गुरुमन्त्रं पूजयेत् ।

कृत्वा पञ्चोपचारांश्च शेषं स्वात्मानले हुनेत् । सुगन्धतिलकाद्यैश्च नानाभरणसंयुतैः ॥ २० ॥
स्वात्मानं समलंकृत्य यथाविभवविस्तरम् । वक्ष्यमाणैस्तथा मन्त्रैर्यजेदागममण्डलम् ॥ २१ ॥
वहत्पुटनासिकया प्रणवैश्च समर्चयेत् । ........................................ ॥

ऐं अष्टाविंशतिक्रममण्डलेभ्यो नमः ऐं ह्सरौं महाप्रेतपद्मासनाय ह्सरौं श्रीपा० । ऐं ऐं प्रणवमण्डलव्यापिपादाय विच्चे ऐं श्री० ।

एतान् साक्षतपुष्पैश्च यजेदर्घ्याम्बुबिन्दुभिः । संस्थाप्य मण्डले तत्र यजेच्छाम्भवमण्डलम् ॥ २२ ॥

---

१ 'पुन' ग पाठ । २ 'निदानेन' क पाठ । ३ 'हु' ग पाठ ।

दक्षिणोदगुदक्षिणोदङ्मध्यदेशे गुरूक्तितः । तारसंपुटितैस्तारैर्यथाक्रमा मन्त्रदेवताः ॥ २३ ॥

ॐ ऐं मन्त्रदेवतायै ऐं । ॐ ह्रीं मन्त्रदेवतायै ह्रीं । ॐ श्रीं मन्त्रदेवतायै श्रीं । ॐ हसख्फ्रें मन्त्रदेवतायै हसख्फ्रें । ॐ हसौः मन्त्रदेवतायै हसौः ।

मध्ये पद्मासने देव्यै पूजयेदेकयोगतः । आवाहनादिमुद्राश्च योनिमुद्रां प्रदर्शयेत् ॥ २४ ॥

धूपं दीपं च नैवेद्यं दद्याच्चदुक्तमन्त्रतः । एवमागममभ्यर्च्य ततोऽष्टदलपङ्कजे ॥ २५ ॥

मण्डलत्रितयं चैव परितो देशमध्यतः । वक्ष्यमाणैस्तथा मन्त्रैः पूजयेदुक्तमार्गतः ॥ २६ ॥

ॐ ह्रं सूर्यमण्डलाय ह्रं नमः । ॐ रं वह्निमण्डलाय रं नमः । ॐ सं सोममण्डलाय सं नमः । ॐ अष्टा-विंशतिमण्डलेभ्यो नमः । ॐ हसौः महाप्रेतपद्मासनाय हसौः नमः ।

पद्ममध्ये प्रतिष्ठाप्य शिवलिङ्गं सुलक्षणम् । साघ्र्यं पुष्पाक्षतैस्तस्मिन् दक्षिणादोत्तराननम् ॥ २७ ॥

। वह्निप्रेतं तथा स्वाहा दक्षे वामे समर्चयेत् । ॥

ॐ ह्रीं जातवेदसे ह्रीं ॐ । ॐ ॐह्रीं स्वाहायै ह्रींॐ ॐ नमः ।

। वरशक्तिधरौ ध्यात्वा तयोर्नाभ्यम्बुजे सिते । एकारपरमं व्योम ध्यात्वा एमिति पूजयेत् ॥ २८ ॥

देवदेव्यौ च तन्मध्ये समावाह्य प्रपूजयेत् । आवाहनादिका मुद्रा ध्यात्वा रेखा विधाय च ॥ २९ ॥

गन्धपुष्पाक्षतैरर्घ्याद्युपचारान् प्रकल्पयेत् । पूर्वादिपद्मपत्रेषु मङ्गलाष्टकमर्चयेत् ॥ ३० ॥

ॐ हूं मङ्गलमहाभैरवानन्दनाथ हूं ॐ श्रीपा० । ॐ ह्रीं ब्रह्माणीदेव्यम्बा ह्रीं ॐ श्रीपा० । ॐ सूं चर्चकम-हाभैरवानन्दनाथ सूं ॐ श्रीपा० । ॐ सीं माहेश्वरीदेव्यम्बा सीं ॐ श्रीपा० । ॐ क्षूं योगमहाभैरवानन्द-नाथ क्षूं ॐ श्रीपा० । ॐ क्षीं कौमारीदेव्यम्बा क्षीं ॐ श्रीपा० । ॐ मूं हरसिद्धमहाभैरवानन्दनाथ मूं ॐ श्रीपा० । ॐ मीं वैष्णवीदेव्यम्बा मीं ॐ श्रीपा० । ॐ लूं भद्रमहाभैरवानन्दनाथ लूं ॐ श्रीपा० । ॐ लीं वाराहीदेव्यम्बा लीं ॐ श्रीपा० । ॐ वूं किलिकिलिभैरवानन्दनाथ वूं ॐ श्रीपा० । ॐ वीं इन्द्राणीदेव्य-म्बा वीं ॐ श्रीपा० । ॐ यूं कालरात्रिमहाभैरवानन्दनाथ यूं ॐ श्रीपा० । ॐ यीं चामुण्डादेव्यम्बा यीं ॐ श्रीपा० । ॐ रूं भीषणमहाभैरवानन्दनाथ रूं ॐ श्रीपा० । ॐ रीं कमलादेव्यम्बा रीं ॐ श्रीपा० । अथ ध्यानम्—

वर्बरकेशहस्ताश्च देव्यो ललितविग्रहाः । कपालशूलहस्ताश्च देव्यो(च) वामाङ्कसंस्थिताः ॥ ३१ ॥

रक्तवर्णास्त्रिनेत्राश्च सर्वाभरणभूषिताः । सर्वे षोडशवर्षाश्च मदघूर्णितलोचनाः ॥ ३२ ॥

अष्टौ बीजैर्विभिन्नाश्च क्रमशा नवमयोजितान् । सानुस्वारान् नवेशस्य कूटस्यैतत् पुरो यजेत् ॥ ३३ ॥

पञ्च तेषां शक्रपश्चानन्ताद्योऽनुग्रहात्मिकाः । अथ ऊर्ध्वमधोर्ध्वान्तःप्रदेशक्रमतोऽर्चयेत् ॥ ३४ ॥

यथा—(?) ॐ आ आदिनाथगुरु आद्यम्बा आ ॐ श्रीपा० । ॐ अ अनादिगुरुनाथ अनाद्यम्बा अं ॐ श्री० । ॐ कु कुलेश्वरगुरुनाथ कुलेश्वर्यम्बा कुं ॐ श्री० । ॐ अं अचिन्त्यगुरुनाथ अचिन्त्यम्बा अं ॐ श्री० ।

एवं गुरुक्रमं पश्चात् परितो देवयोर्यजेत् । देवी श्रीगुरवो देवो यथा पीठे तथाविधाः ॥ ३५ ॥

१ 'न्यग्र' क पाठ । २ 'रहसिद्ध' क पाठ । ३ 'बीजान्' ग, पाठ । ४ 'चरेत' ग पाठ ।

पुनर्देव्याः समभ्यर्च्य तथाङ्गं हृदयादिषु । अङ्गषट्कं समभ्यर्च्य, वह्नीशासुरवायुषु ॥ ३६ ॥

कोणेषु नेत्रं मध्ये च दिक्षु चास्त्रमिति क्रमात् । भोगाङ्गमिति धूपादि हृदयेन प्रकल्पयेत् ॥ ३७ ॥

यथाशक्ति जपं कुर्याद् विद्याद्वयमनन्यधीः ।

नुत्वा स्तुत्वा "नमो दक्षिणवैकुण्ठ" इत्यादिश्लोकपञ्चकैः स्तवीते । अथ पूर्ववत्तत्तेजो वा । पूजयेन्मण्डलत्रये ।

इन्दुं मत्यग्रकुन्दाभं शशपृष्ठसमाश्रितम् । शूलासितर्जनीकार्धकरक्रमविभूषणम् ॥ ३८ ॥

साधकानुग्रहायान्तं त्र्यक्षमेतेन पूजयेत् । ........................ ॥

ऐं हूं निशाटननाथाय हूं ऐं श्री० ।

मण्डले प्राच्यां तपन पूर्वोक्तायुधलक्षणम् । अश्वपृष्ठे समासीनं पीतवर्णतनुं यजेत् ॥ ३९ ॥

ऐं ह्रौं सौराय ह्रौं ऐं श्री० ।

मध्ये च मण्डले वह्निं पूर्वोक्तायुधलक्षणम् । कुङ्कुमक्षोदसङ्काशं यजेन्मेषाधिरोहणम् ॥ ४० ॥

ऐं च्लूं कालानलाय च्लूं ऐं श्री० । श्रीनाथादिपरापद्कपर्यन्तं पूजयेत् ।

ततो विघ्नविनाशाय हेरम्बं स्वस्य वामतः । आवाहयेद् हृदि स्थितं मण्डले चतुरस्रके ॥ ४१ ॥

ग्लामित्यादिना षडङ्गं विधाय ध्यायेत् ।

सितो गजास्यः परशुं दन्तकार्धं त्रिशूलकम् । भुजैश्चतुर्भिर्बिभ्राणो मूषकोपरि संस्थितः ॥ ४२ ॥

लघ्वकादिघ्नसंघातं हरतीति राजवचः ? (गजाननः) ।

ऐं ग्लौं हेरम्बाय ग्लौं ऐं श्री० ॥ ततः परेश्वरं ध्यायेत् । आद्यं मन्त्रं निवेदयेत् । ततो गुरुक्रम । हेरम्बमण्डलाध स्वत्रिकोणे मण्डले साधारे पात्रं प्रतिष्ठाप्य पञ्चप्रणवैर्गन्धपुष्पाक्षतैरभ्यर्च्य प्रथमद्वितीयसहितमध्याम्बुपूर्णसलिले बलिं "ऐं ॐ ह्रीं सर्वविघ्नकृद्भ्य सर्वभूतेभ्यो हुं फट् स्वाहा" अनेन पङ्क्त्याकारेण बलिं दद्यात् । खेचरीमुद्रा योनिमुद्रां प्रदर्श्याशापुरःसरं भूतानि वेष्टितं पात्रं तर्जन्या संप्रदर्शयेत् । हुंहुंहुं तदीयं मन्त्रं तु ह्याकलय्य बलिं क्षिपेत् । ततोऽर्घ्यजलेनावाह्य च समीक्ष्य तत् स्वात्मनि जुहुयात् ॥ लिङ्गागमात्मनामैक्यबुद्ध्या कुर्यात् यथेच्छया पुनः शिरसि गुरुक्रमम् ।

महाश्मशानमभ्यर्च्य क्षेत्रं पीठमनन्तरम् । वृक्षं वल्लीं समभ्यर्च्य पालकानपि मण्डले ॥ ४३ ॥

ततोऽर्चयेच्छिरीषादीन् वृक्षांश्चण्डादिभैरवान् । अनन्ताद्यांस्तथा नागान् पूर्वादीशान्तमादरात् ॥ ४४ ॥

अमिचर्मधरानष्टौ मानुषोत्तमविग्रहान् । ........................ ॥

तद्यथा— ऐं महाश्मशानाय नमः । ऐं प्रयागक्षेत्राय नमः । ऐं परापरपीठाय नमः । ऐं कल्पवृक्षाय नमः । ऐं ज्योतिष्मतीवल्ल्यै नमः । ऐं पालकेभ्यो नमः । अग्निकोणमारभ्य—ऐं शिरीषाय नमः । ऐं करञ्जाय नमः । ऐं अश्वत्थाय नमः । ऐं प्लक्षाय नमः । ऐं अशोकाय नमः । ऐं रक्ताशोकाय नमः । ऐं चूताय नमः । ऐं वटकाय नमः । ऐं चण्डभैरवाय नमः । ऐं क्रोधभैरवाय नमः । ऐं गं गह्वरभैरवाय नमः । ऐं ज्वालामालाकुलभैरवाय नमः । ऐं भीषणाट्टहासभैरवाय नमः । ऐं घोरान्धकारभैरवाय नमः । ऐं लक्ष्मी-

१ 'स्तवेत् ततः' क पाठः । २ 'लिङ्गाङ्गमात्मता' ग पाठः । ३ 'वृक्षवल्ली' ग पाठः । ४ 'मालानुकूल' क पाठः ।

भैरवाय नम । ५ करालभैरवाय नम । ५ अनन्ताय नम । ५ वासुकये नम । ५ तक्षकाय नम । ५ कर्कोटाय नम । ५ शङ्खाय नम । ५ महाशङ्खाय नम । ५ पद्माय नम । ५ महापद्माय नमः ॥ अथ ध्यानम्—

दृश्योर्ध्वाङ्गान् भीषणाभान् वृक्षस्कन्धसमाश्रितान् । त्रिशूलकर्तृमुण्डाग्रान् ध्वजं चासृक्कपालकम् ॥१॥
बिभ्राणांस्तर्जितकरान् जानुन्यस्तमुखाम्बुजान् । निलम्बितैकचरणान् महाश्मशानपालकान् ॥ २ ॥
पीतरक्तनीलसितहरित्कृष्णारुणप्रभान् । श्वेतोष्ट्रभान् हरिव्याघ्रशिवेभतुरगाननान् ॥ ३ ॥
भल्लूकवृषभव्याघ्रहरिवक्त्राथ भैरवान् । असिचर्मधरान् नागान् मानुषोत्तमविग्रहान् ॥ ४ ॥
एवं सम्यक् समभ्यर्च्य चेत्ररक्षां विधाय च । एतानेव स्वदेहस्थान् सञ्चिन्त्यात्रे निवेदयेत् ॥ ५ ॥

अथ तिरस्कारिणीं प्रपूजयेत् । ततो गुरुक्रमम् । ह्सक्लीं नम अङ्गुष्ठाभ्यां नम । भगवति तर्जनीभ्यां नम । माहेश्वरि मध्यमाभ्यां नमः । सर्वपशुजनचक्षुस्तिरस्करणं अनामिकाभ्यां नम । कुरुकुरु कनिष्ठिकाभ्यां नम । स्वाहा करतलकरपृष्ठाभ्यां नम । एवमेव हृदयादि व्यापकं विन्यस्य ध्यायेत् ।

मुक्तकेशीं विवस्त्राङ्गीं सर्वालङ्कारभूषिताम् । स्वयोनिदर्शनान्मुह्यत्पशुवर्गामनुस्मरेत् ॥ १ ॥
ततो हृत्पद्ममध्यस्थां त्रिकोणान्तर्निवासिनीम् । तिरस्कारिणिकां ध्यायेद्भक्तसरचणोत्सुकाम् ॥ २ ॥
श्यामवर्णां मदाघूर्णरक्तनेत्रत्रयान्विताम् । कृष्णाम्बरां गदां खड्गं दधतीं च भुजद्वये ॥ ३ ॥
दोर्भ्यां मनोहराभ्यां च खर्जूरीकुम्भधारिणीम् । ·· · · · ····· ॥

नील तुरङ्गमधिरुह्य सुशोभमानां नीलांशुकाभरणमाल्यविभूषणाढ्या[1] ।
निद्रापटेन भुवनानि तिरोदधाना खड्गायुधा भगवती परिपातु चास्मान्[2] ॥ ४ ॥

इति पञ्चोपचारान् परिकल्प्य हेतुपुष्पालतादिभि पूजागृहाद्बहि परिपूज्यान्यो रक्षां विधाय, ५ ह्सक्लीं नमो भगवति माहेश्वरि सर्वपशुजनचक्षुस्तिरस्करणं कुरु २ स्वाहा । पुन शिरसि गुरुक्रमम् ।

मानमादिपृथिव्यन्तं षडन्वयसुधोदधेः । मरीचिवीचिनिचये चचार चतुरान्तरः ॥ १ ॥

इति मानसक्रमपूजापद्धति ॥ श्रीशाम्भवगुरवे नम । अथ नाभसरश्मिक्रम ।

कूटं विश्वेश्वरस्याथ विशुद्धौ स्फटिकोपमम् । तदुत्थं तथा देवमात्मानं हृदि भावयेत् ॥ १ ॥
शुद्धस्फटिकसङ्काशं षड्वक्त्रं द्वादशाक्षिकम् । भैरवाभं शूलचक्राङ्कुशपाशशरान् वरम् ॥ २ ॥
दक्षे वामे तथा शङ्खध्वजाहिनृमुखं दधत् । चापाभये च बिभ्राणस्तद्वद् देवीं कुलेश्वरीम् ॥ ३ ॥

ध्यायेदिति शेष । दक्षोर्ध्ववामोर्ध्वक्रमत आयुधध्यानम् ।

देवीं च देववर्णाभा तत्प्रभावा तथास्थिता । खड्गकार्धचापशरपाशाङ्कुशाभयवरान् ॥ ४ ॥
पुस्तजाप्यशूलकादीन् सदधत्यङ्कमण्डले । · · ·· ···· ॥

इति ध्यात्वा, ५ ह्स्रा क्रा ५ इत्यादिनाङ्गन्यास विधाय, शिरसि षट्कोणे पूर्वादीशान्तं षट्त्रिंशद्रश्मीन् भावयेत् । ५ हं हृदयानन्दनाथ कौलिनीपराम्बा ह्र ५ श्रीपा० । ५ धं धरानन्दनाथ धात्रीपराम्बा धं ५ श्री० । ५ भा भावानन्दनाथ विश्वात्मिकापराम्बा भा ५ श्री० । ५ भं भगानन्दनाथ[3] योगिनीपराम्बा

1 'परिभ्रमन्ती नीलाम्बराभरणमाल्यविभूषनाढ्या' क पाठ । 2 'भक्तान्' क पाठ । 3 'भोगानन्द' ख पाठ ।

मं ऐं श्रीं० । ऐं मं महानन्दनाथ ब्रह्मपराम्बा मं ऐं श्रीं० । ऐं सं सर्वानन्दनाथ शाम्भवीपराम्बा सं ऐं श्रीं० । (६) इति पूर्वकोणे ॥ ऐं द्रं द्रवानन्दनाथ कालिकापराम्बा द्रं ऐं श्रीं० । ऐं रं रमानन्दनाथ दुष्टचाण्डालीपराम्बा रं ऐं श्रीं० । ऐं मं मोहानन्दनाथ अघोरापराम्बा मं ऐं श्रीं० । ऐं मं मनोभवानन्दनाथ हेलापराम्बा मं ऐं श्रीं० । ऐं सं सेकानन्दनाथ महारक्तापराम्बा सं ऐं श्रीं० । ऐं जं ज्ञानानन्दनाथ कुब्जिकापराम्बा जं ऐं श्रीं० । (६) इत्याग्नेयकोणे ॥ ऐं खं खेटानन्दनाथ डाकिनीपराम्बा खं ऐं श्रीं० । ऐं ज्वं ज्वालानन्दनाथ राकिणीपराम्बा ज्वं ऐं श्रीं० । ऐं मं महाङ्कुशानन्दनाथ लाकिनीपराम्बा मं ऐं श्रीं० । ऐं शं श्रेयोऽज्वालानन्दनाथ काकिनीपराम्बा शं ऐं श्रीं० । ऐं तं तेजसानन्दनाथ शाकिनीपराम्बा तं ऐं श्रीं । ऐं मं मूर्धानन्दनाथ हाकिनीपराम्बा मं ऐं श्रीं० । (६) इति नैर्ऋत्यकोणे ॥ ऐं वं वायव्यानन्दनाथ पद्मापराम्बा वं ऐं श्रीं० । ऐं कुं कुलानन्दनाथ सिंहापराम्बा कुं ऐं श्रीं । ऐं सं संहारानन्दनाथ कुलाम्बिकापराम्बा सं ऐं श्रीं० । ऐं वं विश्वम्भरानन्दनाथ कामापराम्बा वं ऐं श्रीं० । ऐं कं कौटिकानन्दनाथ कूर्ममातापराम्बा कं ऐं श्रीं० । ऐं गं गालवानन्दनाथ कंकालीपराम्बा गं ऐं श्रीं० । (६) इति पश्चिमकोणे॥ ऐं वं व्योमानन्दनाथ व्योमापराम्बा वं ऐं श्रीं० । ऐं शं श्वासानन्दनाथ नादापराम्बा शं ऐं श्रीं० । ऐं खं खेचरानन्दनाथ महिमापराम्बा खं ऐं श्रीं० । ऐं यं यद्धुलानन्दनाथ महामायापराम्बा यं ऐं श्रीं० । ऐं ज्ञां ज्ञानानन्दनाथ कुण्डलीपराम्बा ज्ञां ऐं श्रीं० । ऐं वं विश्वानन्दनाथ उन्मनीपराम्बा वं ऐं श्रीं० । (६) इति वायव्यकोणे ॥ ऐं आं आज्ञानन्दनाथ इन्धिकापराम्बा आं ऐं श्रीं० । ऐं मं मदनानन्दनाथ दीपिकापराम्बा मं ऐं श्रीं० । ऐं यं यशानन्दनाथ रेचिकापराम्बा यं ऐं श्रीं० । ऐं शं शंखोदयानन्दनाथ मोचिकापराम्बा शं ऐं श्रीं० । ऐं वं वरानन्दनाथ चित्तिपराम्बा वं ऐं श्रीं० । ऐं पं परानन्दनाथ परापराम्बा पं ऐं श्रीं० । (६) इतीशानकोणे ॥ अथ रश्मिध्यानम्—

शुक्लं रक्तं श्यामलं च धूम्राभं च रविप्रभम् । षट्कं स्फटिकसङ्काशं षट्कं षट्कं क्रमेण तु ॥ १ ॥
वराभययुताः सर्वा नाभसक्रमदेवताः । नत्वा स्तुत्वा मनुं जप्त्वा नाभमक्रममाचरेत् ॥ २ ॥

इति विद्येश्वरक्रम. । हस्रौं हंसरक्तामित्यादिनाङ्गन्यास ।

कूटं हंमेश्वरस्याथ धूम्राभं हृदि भावयेत् । तदुद्भवं तथा देवमात्मानं परिभावयेत् ॥ १ ॥

ध्यानं विद्येश्वरवत् । पुनर्गुरुक्रमम् । शिरसि षट्कोणे पूर्वादीशान्तं सप्तविंशतिरश्मीन् भावयेत् । ऐं लमयरूं खगेश्वरानन्दनाथ भद्रापराम्बा लमयरूं ऐं श्रीं० । ऐं लमयरूं कूर्मानन्दनाथ माधवीपराम्बा लमयरूं ऐं श्रीं० । ऐं लमयरूं मेघानन्दनाथ केशापराम्बा लमयरूं ऐं श्रीं० । ऐं लमयरूं मीनानन्दनाथ मल्लीपराम्बा लमयरूं ऐं श्रीं० । (४) इति पूर्वकोणे ॥ ऐं वमयरूं ज्ञानानन्दनाथ विमलापराम्बा वमयरूं ऐं श्रीं० । ऐं वमयरूं महानन्दनाथ शाम्भवीपराम्बा वमयरूं ऐं श्रीं० । ऐं वमयरूं तीव्रानन्दनाथ लीलापराम्बा वमयरूं ऐं श्रीं० । ऐं वमयरूं प्रियानन्दनाथ कुमुन्दापराम्बा वमयरूं ऐं श्रीं० । ऐं वमयरूं कौलि-

१ 'प्र प्रभावा' क पाठ. । २ 'लीला' ख पाठ' । ३ 'मोहिनी' ख पाठ । ४ 'रुधिका' ग. पाठ । ५ 'पं परा' क. पाठ । ६ 'हस्रां हसें' क पाठ. । ७ 'मुकुंदा' ग पाठ ।

कानन्दनाथ मेनकापराम्बा यमयरूं ऐं श्रीं० । (५) इत्यग्निकोणे ॥ ऐं रमयरूं डामरानन्दनाथ डाकिनी-पराम्बा रमयरूं ऐं श्रीं० । ऐं रमयरू रामरानन्दनाथ राकिणीपराम्बा रमयरूं ऐं श्रीं० । ऐं रमयरूं लामरानन्दनाथ लाकिनीपराम्बा रमयरू ऐं श्रीं० । ऐं रमयरूं कामरानन्दनाथ काकिनीपराम्बा रमयरू ऐं श्रीं० । ऐं रमयरूं सामरानन्दनाथ शाकिनीपराम्बा रमयरूं ऐं श्रीं० । ऐं रमयरूं हामरानन्दनाथ हाकिनीपराम्बा रमयरूं ऐं श्रीं० । (६) इति नैर्ऋत्यकोणे ॥ ऐं यमयरूं आधारेशानन्दनाथ रक्तापराम्बा यमयरूं ऐं श्रीं० । ऐं यमयरू चक्रेशानन्दनाथ बिन्दुपराम्बा यमयरूं ऐं श्रीं० । ऐं यमयरूं कुरङ्गेशानन्दनाथ कुलापराम्बा यमयरू ऐं श्रीं० । ऐं यमयरूं समुद्रेशानन्दनाथ कुब्जिकापराम्बा यमयरू ऐं श्रीं० । (४) इति पश्चिमकोणे ॥ ऐं हमयरू हृदेशानन्दनाथ कमलापराम्बा हमयरू ऐं श्रीं० । ऐं हमयरू गिरीशानन्दनाथ कुटिकदीधितिकापराम्बा हमयरूं ऐं श्रीं० । ऐं हमयरूं शिखेशानन्दनाथ कर्बुरापराम्बा हमयरू ऐं श्रीं० । ऐं हमयरू वर्मेशानन्दनाथ बहुरूपापराम्बा हमयरू ऐं श्रीं० । ऐं हमयरू आग्नेशानन्दनाथ महत्तारीपराम्बा हमयरूं ऐं श्रीं० । (५) इति वायव्यकोणे ॥ ऐं समयरूं परगुर्वानन्दनाथ मङ्गलापराम्बा समयरू ऐं श्रीं० । ऐं समयरूं पराधिकारगुर्वानन्दनाथ कौसलीपराम्बा समयरू ऐं श्रीं० । ऐं समयरूं पूज्यगुर्वानन्दनाथ सैमानीपराम्बा समयरूं ऐं श्रीं० । (३) इतीशानकोणे रश्मित्रयं पूजयेत् ॥ अथ रश्मिध्यानम्—

पीतं चतुष्कं श्यामं तु पञ्चकं रक्तसन्निभम् । पदकं चतुष्कं श्यामं तु धूम्राभं पञ्चकं पुनः ॥ १ ॥
चन्द्रगर्भं त्रिकं सर्वे बालसूर्यसमप्रभाः । वरदाभयहस्ताश्च मदघूर्णितलोचनाः ॥ २ ॥
नत्वा स्तुत्वा मनुं जप्त्वा वायव्यक्रममाचरेत् । . ... ... . . ॥

पुनर्गुरुक्रममिति हसेश्वरक्रम ॥ अथ संवर्तकेश्वरक्रम । ध्यानम्—

कूटं* सप्तमकं ध्यात्वा संवर्तेशस्य सादरात् । उदयार्कसमप्रख्यं स्वाधिष्ठाने तदुद्भवम् ॥ १ ॥
देवं विभावयेत् पश्चात् सम्यक् सूत्रोक्तमार्गतः । भिन्ननीलाञ्जनप्रख्यं त्रिनेत्रं दशाङ्घ्रिकम् ॥२॥
लम्बदंष्ट्राकरालास्यं बर्बरोर्ध्वशिरोरुहम् । द्विरष्टवर्षदेशीयं रत्नसर्पास्थिचर्चितम् ॥ ३ ॥
यावद्वरुणमध्यस्थमेकपादकमास्थितम् । पञ्चासनासने वह्निनाभिपद्माङ्गुलीयकम् † ॥ ४ ॥
मुण्डमालाचर्चिताङ्गं गन्धादिकुसुमाञ्चितम् । आज्ञालिबद्धकट्टार§कटिकाञ्चीपदाञ्चितम् ॥ ५ ॥
अस्य दक्षिणदोर्दण्डे शस्त्राणि विविधानि च । शूलं चक्रं ध्वजं दानं दधद्वामे परं शृणु ॥ ६ ॥
पारिजातं जाप्यमाला पुस्तकं चाभयं प्रिये । शेषाभ्यां चैव बाहुभ्यां ब्रह्मचर्मविदारणे§ ॥ ७ ॥
ततो रक्तनिभं श्रोकं (कूटं) तुरीयं योनिमध्यतः । ध्यात्वा तद्रश्मिसंभूतं देवीरूपमनन्यधीः ॥८॥
स्वात्मानं मूलसूत्रोक्तक्रमात् सम्यग् विभावयेत् । सहस्रभेदसंभिन्ना नित्येयं श्रीमहाचितिः ॥ ९ ॥
तेभ्यः सारतरा मूर्तिः समयाख्या निगद्यते । अतसीपुष्पसङ्काशशरीराशुधरा चितिः ॥ १० ॥
दशास्या वा षडास्या वा विंशत्यास्या शतोन्मुखी । सहस्ररश्मिसंघातसंपूर्णस्फुरदीक्षणा ॥ ११ ॥

---

१ 'अमृत' क पाठ । २ 'रमा' क पाठ । * 'कूटमिति' । ३ 'हस्फ्रेमिति चतुर्थम्' । † वह्निस्वरूपनाभिपद्मप्राप्तपादाङ्गुलीयकमित्यर्थः । ‡ कामधात. । § ब्रह्मकपाल दष्ट्र चेत्यर्थः ।

शूलकार्ध चापशरखड्गवरधरा चितिः । सृणिपाशचक्रशंखगदारत्नविभूषिता ॥ १२ ॥

डिण्डीडमरुवज्राख्यभुशुण्डीशूलपाणिनी । शक्तिशल्यलसत्कुन्तमर्पज्ञाप्यार्घ(र्घ्य)धारिणी ॥ १३ ॥

इति ध्यानम् ॥ अथ संवर्तेश्वरन्यास—ऐं हं व्योमानन्दनाथ रजनीपराम्बा हं ऐं करतलाभ्यां नमः । ऐं सं विशानन्दनाथ चितिपराम्बा सं ऐं करपृष्ठाभ्यां नमः । ऐं क्षं अहङ्कारानन्दनाथ क्षोधिणीपराम्बा क्षं ऐं अङ्गुष्ठाभ्यां नमः । ऐं मं बुद्ध्यानन्दनाथ कुलवागीश्वरीपराम्बा मं ऐं तर्जनीभ्यां नमः । ऐं लं स्मृत्यानन्दनाथ मातृकापराम्बा लं ऐं मध्यमाभ्यां नमः । ऐं वं अमृतानन्दनाथ देवर्षीपराम्बा वं ऐं अनामिकाभ्यां नमः । ऐं यं अचलानन्दनाथ चलापराम्बा यं ऐं कनिष्ठिकाभ्यां नमः । ऐं रं दीप्तानन्दनाथ ज्वालिनीपराम्बा रं ऐं करपृष्ठाभ्यां नमः । ऐं ऊं प्रकृतीशानन्दनाथ प्रकृतीपराम्बा ऊं करतलाभ्यां नमः । इति करन्यासः ॥ ऐं हंसं विशुद्धानन्दनाथ शंखिनीपराम्बा हंसं ऐं हृदयाय नमः । ऐं क्षंमं प्राणानन्दनाथ योगीश्वरीपराम्बा क्षंमं ऐं शिरसे स्वाहा । ऐं लवं ज्ञानानन्दनाथ विन्दुपराम्बा लवं ऐं शिखायै वषट् । ऐं यरं व्यापकानन्दनाथ इन्धिकापराम्बा यरं ऐं कवचाय हुं । ऐं ऊं विस्तारानन्दनाथ विस्तारापराम्बा ऊं ऐं नेत्रत्रयाय वौषट् । ऐं अंअः शूरानन्दनाथ प्रीतवतीपराम्बा अंअः ऐं अस्त्राय फट् । इत्यङ्गन्यासः ॥ ऐं हंसं कालवक्त्रानन्दनाथ योगीश्वरीपराम्बा संहं ऐं पश्चिमवक्त्राय नमः । ऐं क्षंमं रौद्रवक्त्रानन्दनाथ संहारिणीपराम्बा मंक्षं ऐं उत्तरवक्त्राय नमः । ऐं लवं विश्वप्रसनानन्दनाथ दहनीपराम्बा वंलं ऐं दक्षिणवक्त्राय नमः । ऐं यरं प्रकाशानन्दनाथ ज्योतिष्पराम्बा रयं ऐं पूर्ववक्त्राय नमः । ऐं ऊं हर्षानन्दनाथ अमृतवाहिनीपराम्बा ऊं ऐं ऊर्ध्ववक्त्राय नमः । ऐं अंअः परानन्दनाथ परापराम्बा अः अं ऐं परापरवक्त्राय नमः । इति वक्त्रन्यासः ॥ अथ करन्यास—ऐं ऐं नित्ये भगवति हसखफ्रें कुलेश्वरि ऐं कनिष्ठिकाभ्यां नमः । ऐं ह्रांह्रूंह्रींह्रांह्लृंह्रौंह्रैंहंह्रौं ङञणनमे ऐं अनामिकाभ्यां नमः । ऐं ज्रांज्रूंज्रींर्थीफट् हस्रौं फ्रें अघोरमुखि कुब्जिकायै ऐं मध्यमाभ्यां० । ऐं छ्रांछ्रूंछ्रीं घोरे अघोरे ऐं तर्जनीभ्यां० । ऐं यंरंलंवंहंसं ऐं अङ्गुष्ठाभ्यां० । ऐं किणिकिणि महाकिणिकिणि विच्चे ऐं करतलकरपृष्ठाभ्यां नमः । एभिरेव हृदयाद्यङ्गन्यासः ॥ ऐं ऐं नित्ये भगवति ऐं पश्चिमवक्त्राय नमः । ऐं हसखफ्रें कुलेश्वरि ऐं उत्तरवक्त्राय नमः । ऐं ह्रांह्रूंह्रींह्लांह्लृंह्लृंह्लौंह्रैंहंह्रौं ऐं दक्षिणवक्त्राय नमः । ऐं ङञणनमे ऐं पूर्ववक्त्राय नमः । ऐं ज्रांज्रूंज्रींर्थीफट् हस्रौं फ्रें ऐं वायव्यवक्त्राय नमः । ऐं अघोरमुखि कुब्जिकायै ऐं नैर्ऋत्यवक्त्राय नमः । ऐं छ्रांछ्रूंछ्रीं ऐं ईशानवक्त्राय नमः । ऐं घोरे अघोरे ऐं आग्नेयवक्त्राय नमः । ऐं यंरंलंवंहंसं ऐं ऊर्ध्ववक्त्राय नमः । ऐं किणिकिणि महाकिणिकिणि विच्चे ऐं परापरवक्त्राय नमः । इति महाशक्तिन्यासः ॥ शिरसि षट्कोणे नैर्ऋत्याद्याग्नेयान्तमेकत्रिंशद्रश्मीन् भावयेत् । ऐं सहलां परापरानन्दनाथ चण्डीश्वरीपराम्बा सहलां ऐं । ऐं सहलां परानन्दनाथ गुह्यकालिकापराम्बा सहलां ऐं । ऐं सहलां अपरानन्दनाथ संवर्तापराम्बा सहलां ऐं । ऐं सहां परमानन्दनाथ उच्छुष्मापराम्बा सहां ऐं । ऐं सहलां पैचिकानन्दनाथ नीलकुब्जिकापराम्बा

१ 'पया' क पाठ । २ 'कुम्भ' क पाठः । ३ 'वागीश्वरी' ख पाठ । ४ 'ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः' क पाठ. ।

मङ्गला ॐ । (५) इति नैर्ऋत्यकोणे ॥ ॐ सहर्वां अघोरानन्दनाथ गन्धापराम्बा सहौं ॐ । ॐ सहौं डामरा-घोरानन्दनाथ रसापराम्बा सहौं ॐ । ॐ सहौं ललितानन्दनाथ रूपापराम्बा सहौं ॐ । ॐ सहौं स्वच्छा-नन्दनाथ स्पर्शापराम्बा सहौं ॐ । ॐ सहौं भूतेश्वरानन्दनाथ शब्दापराम्बा सहौं ॐ श्री० । (५) इति पश्चिमकोणे ॥ ॐ सहूं आनन्दानन्दनाथ डाकिनीपराम्बा सहूं ॐ श्री० । ॐ सहूं आलस्यानन्दनाथ रक्त-डाकिनीपराम्बा सहूं ॐ श्री० । ॐ सहूं महानन्दनाथ चक्रडाकिनीपराम्बा सहूं ॐ श्री० । ॐ सहूं योग्या-नन्दनाथ पद्मडाकिनीपराम्बा सहूं ॐ । ॐ सहूं अतीतानन्दनाथ कुब्जडाकिनीपराम्बा सहूं ॐ । ॐ सहूं पादे-श्वरानन्दनाथ प्रचण्डडाकिनीपराम्बा सहूं ॐ । (६) इति वायव्यकोणे ॥ ॐ सहयें योगेश्वरानन्दनाथ प्रच-ण्डापराम्बा सहयें ॐ । ॐ सहें पीठेश्वरानन्दनाथ कौलिनीपराम्बा सहें ॐ । ॐ सहें कुलकौलेश्वरानन्द-नाथ पावनीपराम्बा सहें ॐ । ॐ सहें कुब्जेश्वरानन्दनाथ महासमयापराम्बा सहें ॐ । (४) इतीशानकोणे ॥ ॐ सहौं श्रीकण्ठानन्दनाथ कामापराम्बा सहौं ॐ । ॐ सहौं अनन्तानन्दनाथ चर्चिकापराम्बा सहौं ॐ । ॐ सहौं शङ्करानन्दनाथ ज्वालापराम्बा सहौं ॐ । ॐ सहौं पिङ्गलानन्दनाथ कोलारात्रापराम्बा सहौं । ॐ सदा-ख्यानन्दनाथ नागापराम्बा सहौं ॐ । (५) इति पूर्वकोणे ॥ ॐ सहः कालगुर्वानन्दनाथ परापराम्बा सहः ॐ । ॐ सहः सिद्धगुर्वानन्दनाथ शान्त्यतीतापराम्बा सहः ॐ । ॐ सहः रत्नगुर्वानन्दनाथ शान्तिपराम्बा सहः ॐ । ॐ सहः शिवगुर्वानन्दनाथ विद्यापराम्बा सहः ॐ । ॐ सहः मैनाकगुर्वानन्दनाथ प्रतिष्ठापराम्बा सहः ॐ । ॐ सहः समयगुर्वानन्दनाथ निवृत्तिपराम्बा सहः ॐ । (६) इत्याग्नेयकोणे ॥

पञ्चकायाः क्रमात् पीतश्यामकृष्णारुणप्रभाः । शुक्लस्फटिकवर्णाभा वरदाभयसंयुताः ॥ १४ ॥
कार्श्यदाकारिताः सर्वा निराकारा निरामयाः । पञ्चकं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः ॥ १५ ॥
षट्कमिति क्रमाद्भिन्नास्तैजसक्रमरश्मयः । नत्वा स्तुत्वा मनुं जप्त्वा तैजसक्रममाचरेत् ॥ १६ ॥

पुनर्गुरुक्रम ॥ इति सवर्तकेश्वर ॥

अथ द्वीपेश्वरक्रम । ध्यानम्—

कुर्द * द्वीपेश्वरस्याथ मणिपूरं मितप्रभम् । ध्यात्वा तदुद्भवं देवमात्मानं परिभावयेत् ॥ १ ॥
श्यामवर्णो दशभुजो पञ्चैकाम्बकचर्चितः । दंष्ट्राकरालवदनो भैरवाभरणो विभुः ॥ २ ॥
महाशवासनस्थोऽप्य मातृमण्डलमध्यगः । सर्वतन्त्रेश्वरः श्रीमान् सर्वाश्रमसुपूजितः ॥ ३ ॥
शूलं खड्गं तथा चक्रमङ्कुशं वरदं तथा । बिभ्रद् दक्षे तथा वामे खट्वाङ्गं परशुं तथा ॥ ४ ॥
गदां पाशं चाभयाख्य बाहुभ्यां गजचर्मकम् । द्वीपेश्वरं विभाव्याथ ततस्तुर्याक्षरं स्मरेत् ॥ ५ ॥
देवीं च देववर्णाभां स्थितां च शयनोपरि । शङ्खचक्रगदापद्मशूलं पाशं वराभये ॥ ६ ॥

दधतीमितिशेष । इति ध्यानम् ॥ आ इत्यादि हैंस्राहस्रौं ऐं इत्याद्यङ्गन्यास विधाय, शिरसि षट्कोणे ईशानादि-वायव्यान्त षड्विंशतिरश्मीन् भावयेत् । ॐ लं सद्यानन्दनाथ मायापराम्बा लं ॐ । ॐ लं वामानन्दनाथ श्रीप-राम्बा लं ॐ । ॐ लं अघोरानन्दनाथ पद्मापराम्बा लं ॐ । ॐ लं तत्पुरुषानन्दनाथ अम्बिकापराम्बा लं ॐ । (४) इतीशानकोणे ॥ ॐ वं अनन्तानन्दनाथ निवृत्तिपराम्बा वं ॐ । ॐ वं अनाथानन्दनाथ प्रतिष्ठाप-

१ 'कराला' ग पाठ । २ 'कालरात्रिगुरु' ख पाठ. । * दमकूमिति । ३ 'दमकांपु' ग पाठ. ।

राम्बा यं ५ श्रीं० । ५ यं अनाथितानन्दनाथ विद्यापराम्बा यं ५ श्रीं० । ५ यं अचिन्त्यानन्दनाथ शान्ति-पराम्बा यं ५ । (४) इति पूर्वकोणे ॥ ५ रं शेखरानन्दनाथ शान्त्यतीतापराम्बा रं ५ । ५ रं तीव्रानन्द-नाथ गङ्गापराम्बा रं ५ । ५ रं मणिवाहानन्दनाथ सरस्वतीपराम्बा रं ५ । ५ रं अम्बुवाहानन्दनाथ कम-लापराम्बा रं ५ । ५ रं जालेश्वरानन्दनाथ यमुनापराम्बा रं ५ । ५ रं तेजोधीशानन्दनाथ पार्वतीपराम्बा रं ५ । (६) इत्यग्निकोणे ॥ ५ यं विद्यावागीश्वरानन्दनाथ चित्रापराम्बा यं ५ । ५ यं चतुर्विंशेश्वरानन्द-नाथ सुकमलापराम्बा यं ५ । ५ यं उमागहेश्वरानन्दनाथ मन्मथापराम्बा यं ५ श्रीं० । ५ यं हृष्णेश्वरा-नन्दनाथ श्रीपराम्बा यं ५ श्रीं० । (४) इति नैर्ऋत्यकोणे ॥ ५ हं श्रीकण्ठानन्दनाथ लयापराम्बा हं ५ श्रीं० । ५ हं अनन्तानन्दनाथ वसन्तापराम्बा हं ५ । ५ हं शङ्करानन्दनाथ रत्नमेखलापराम्बा हं ५ । ५ हं पिङ्गलानन्दनाथ यशोवतीपराम्बा हं ५ । ५ हं सदाख्यानन्दनाथ कुब्जिकापराम्बा हं ५ । (५) इति पश्चिमकोणे ॥ ५ सं सर्वदेवेशानन्दनाथ वामापराम्बा सं ५ । ५ सं परमदिव्यौघानन्दनाथ ज्येष्ठापराम्बा सं ५ । ५ सं पीठेश्वरानन्दनाथ रौद्रीपराम्बा सं ५ । (३) इति वायव्यकोणे ॥

पीतं श्यामं रक्तकृष्णं शुक्लं भास्करसन्निभम् । चतुष्कं च चतुष्कं च षट्कं भूयश्चतुष्ककम् ॥ ७ ॥
पञ्चकं त्रिकमित्येव भिन्ना जलमरीचयः । नत्वा स्तुत्वा मनुं जप्त्वा ह्यथाप्य-क्रममाचरेत् ॥ ८ ॥

पुनर्गुरुक्रमः । इति द्वीपेश्वरक्रमः ॥

अथ पार्थिवक्रमस्तत्र न्यासः । ५ हंसं अङ्गुष्ठाभ्यां नमः । ५ क्षमं तर्जनीभ्यां नमः । ५ लवं मध्य-माभ्यां नमः । ५ यरं अनामिकाभ्यां नमः । ५ ऊ कनिष्ठिकाभ्यां नमः । ५ अंअः करतलकरपृष्ठाभ्यां नमः । एभिरेव हृदयाद्यङ्गन्यासः ॥ ५ हसखफ्रां नमो भगवति कमलायै हसखफ्रां ५ कनिष्ठिकाभ्यां नमः । ५ हसखफ्रीं कुब्जिकायै कुलदीपिकायै हसखफ्रीं ५ अनामिकाभ्यां नमः । ५ हसखफ्रूं ह्रांह्रींह्रीं ङञणनमे वर्वरायै[1] हसखफ्रूं ५ मध्यमाभ्यां नमः । ५ हसखफ्रैं अघोरमुखि बहुरूपायै हसखफ्रैं ५ तर्जनीभ्यां नमः । ५ हसखफ्रौं छ्रांछ्रींछ्रीं महातारायै हसखफ्रौं ५ अङ्गुष्ठाभ्यां नमः । ५ हसखफ्रः किणिकिणि विच्चे कोकणायै हसखफ्रः ५ करतलकरपृष्ठाभ्यां नमः । एवमेव हृदयादिन्यासः ॥ तथा वस्त्रन्यासः । अथ ध्यानम्—

विभाव्यं देवकूटं तु मूलाधारेऽरुणप्रभम् । तदूर्ध्वं तथा देवमात्मानं परिभावयेत् ॥ १ ॥
संवर्तेश्वरतुल्यस्तु देवो ललितविग्रहः । .................................... ॥

संवर्तेश्वरप्रथमध्यानम् । अथ शक्तिध्यानम्—

नीलाञ्जनचयप्रख्यां कुब्जरूपां महोदरीम् । षड्वक्त्रां द्वादशभुजां रत्नसर्पास्थिचर्चिताम् ॥ २ ॥
मुण्डमालाधरां रौद्रीं दंष्ट्राकालानलाननाम् । अष्टादशाम्बिकां देवीं वर्वरोर्ध्वशिरोरुहाम् ॥ ३ ॥
व्याघ्रचर्मपरीधानां सिंहचर्मोत्तरच्छदाम् । दिव्याभरणभूषाङ्गीं ध्यायेदट्टाट्टहासिनीम् ॥ ४ ॥
अस्याः पीतमाद्यवक्त्रमुत्तरं सोमसन्निभम् । दक्षिणं कृष्णवर्णं च यत्प्राग् दर्शितमम्बिके ॥ ५ ॥
पूर्ववक्त्रं भवेद्रक्तमीशानं स्फटिकोपमम् । सहस्रसूर्यसङ्काशमूर्ध्ववक्त्रं महाचितेः ॥ ६ ॥

---

१ 'यदाहारायै' इति पाठः ।

दग्ध्राकजालान्यखिलचक्राणपुङ्कानि शम्भुना । त्रिशूलचक्रवज्राणि अङ्कुशं शरकर्तरीः ॥ ७ ॥
दक्षिणे वामतो देवी नीलोत्पलशताकार(नच्छद)म् । अन्यतसमुण्डखट्वाङ्ग घण्टापुस्तधनुस्तथा ॥ ८ ॥
कपाल वामके हस्ते सिंहासनमनामनम् । . . .... . .... ..... .. .. ॥

इति ध्यात्वा, पार्थिवशाम्भवेनाङ्ग्ष्याम्ं विधाय शिरसि षट्कोणे पश्चिमादिनिर्ऋत्यन्तमष्टाविंशतिरश्मीन् भावयेत् । ऐँ लमयरू उड्याणमहापीठ उड्डेश्वरानन्दनाथ उड्डेश्वरीपराम्बा लमयरू ऐँ श्री० । ऐँ वमयरू जालन्धरमहापीठ जालेश्वरानन्दनाथ जालेश्वरीपराम्बा वमयरू ऐँ । ऐँ रमयरू पूर्णगिरिमहापीठ पूर्णगिरिजानन्दनाथ पूर्णेश्वरीपराम्बा रमयरूं ऐँ । ऐँ मयरू कामेश्वरमहापीठ कामेश्वरानन्दनाथ कामेश्वरीपराम्बा मयरूं ऐँ । (४) इति पश्चिमकोणे ॥ ऐँ ग्लू श्रीकण्ठानन्दनाथ गगनापराम्बा ग्लू ऐँ । ऐँ स्लूं अनन्तानन्दनाथ स्वर्गापराम्बा स्लू ऐँ । ऐँ म्लू शङ्करानन्दनाथ मर्त्यापराम्बा म्लूं ऐँ । ऐँ प्लू पिङ्गलानन्दनाथ पातालापराम्बा प्लूं ऐँ । ऐँ न्लूं सद्योजातानन्दनाथ नागापराम्बा न्लूं ऐँ । ऐँ (५) इति वायव्यकोणे ॥ ऐँ डमयरू आनन्दानन्दनाथ डाकिनीपराम्बा डमयरू ऐँ । ऐँ रमयरूं आवरयानन्दनाथ राकिणीपराम्बा रमयरू ऐँ । ऐँ लमयरू पूज्यानन्दनाथ लाकिनीपराम्बा लमयरू ऐँ । ऐँ कमयरू योगानन्दनाथ काकिनीपराम्बा कमयरू ऐँ । ऐँ शमयरूं अतीतानन्दनाथ शाकिनीपराम्बा शमयरू ऐँ । ऐँ हमयरूं पादानन्दनाथ हाकिनीपराम्बा हमयरूं ऐँ । ऐँ (६) इतीशानकोणे ॥ ऐँ ल आधारेशानन्दनाथ रक्तापराम्बा ल ऐँ । ऐँ चं चक्रेशानन्दनाथ चाण्डिकापराम्बा च ऐँ । ऐँ र कुरङ्गेशानन्दनाथ करालापराम्बा रं ऐँ । ऐँ यं मदप्रेशानन्दनाथ महोच्छुष्मापराम्बा यं ऐँ । (४) इति पूर्वकोणे ॥ ऐँ ग अनादिविमलानन्दनाथ शावरीपराम्बा गं ऐँ । ऐँ सं सर्वज्ञविमलानन्दनाथ पुलिन्दिनीपराम्बा स ऐँ । ऐँ य योगविमलानन्दनाथ शबरीपराम्बा यं ऐँ । ऐँ यं सिद्धविमलानन्दनाथ पराम्बिकापराम्बा य ऐँ । ऐँ नं समयविमलानन्दनाथ कुलिकापराम्बा ने ऐँ । (५) इत्यग्निकोणे ॥ ऐँ लमयरू मित्रेशानन्दनाथ कुब्जिकापराम्बा लमयरू ऐँ श्री० । ऐँ वमयरूं उड्डीशानन्दनाथ लक्ष्मीपराम्बा वमयरू ऐँ । ऐँ रमयरूं षष्ठीशानन्दनाथ कुलेश्वरीपराम्बा रमयरू ऐँ । ऐँ यमयरू चर्यानन्दनाथ कुलकौलेश्वरीपराम्बा यमयरू ऐँ । (४) इति नैर्ऋत्यकोणे ॥ अथ ध्यानम्—

पीत श्याम कृष्णरक्तं शुक्लं भास्करसन्निभम् । चतुष्कायाः क्रमात्सर्वे वरदाभयसंयुताः ॥ १ ॥
चतुष्कं पञ्चक षट्कं चतुष्क पञ्चक पुनः । चतुष्कमिति संभिन्नाः क्रमात् पार्थिवरश्मयः ॥ २ ॥

पुनर्देवदेव्यौ त्रिधा सपूज्य, पुनर्गुरुक्रम नत्वा स्तुत्वा मनुं च जप्त्वा पार्थिवरूपमाचरेत् । इति नवात्मेश्वरक्रम· ॥ अथायुधपूजा—"आयुधानि यजेत् पश्चात् कराग्रेषु च मन्त्रवित् ।" ऐँ हं ब्रह्मकपालाय हं ऐँ नम । एवं ऐँ सं त्रिशूलाय सं० ऐँ । हं चक्राय हं । मं ध्वजाय मं । ल वराय ल । व ब्रह्मपादाय वं । यं पारिभद्रप्रसूनाय य । रं जाप्यमालायै रं । उं पुस्तकाय उं । श्रं अभयाय श्रं । श्रीपादुका पूजयामि तर्पयामि नम· सर्वत्र । मानसादिपृथिव्यन्त रश्मीन् भावयेत् पुस.

---

१ 'काले' क पाठ ।

स्त्रियस्तथा क्रमादानन्दनाथेति परान्वेत्याद्युदीरिताः । श्रीपादुकां तर्पयामि नमो वदेत्, अर्चयेदर्चकेन्द्रः पूजयामीति, निर्वाणगुरुसंप्रदायमवलम्ब्य कल्पिते ललितेश्वरविरचिते शिवपदन्यर्चने ।

श्रीनाथादिमुखाम्भोजात् पारम्पर्ययुतं जपेत् । उपदिष्टं मन्त्रजातमूर्ध्वाम्नायादिगोचरम् ॥ १ ॥
तत्र सर्वमसिन् समये पीठपूजादिकं विना । पारम्पर्यगुरुनाथमूलविद्याङ्गमन्ततिः ॥ २ ॥
अङ्गपूजामसर्चान्ते बहिः पूजां तु वाथवः । नवात्ममण्डले तत्र महापूर्वश्मशानके ॥ ३ ॥
अनेककोटियोगीन्द्रयोगिनीभिरवादिभिः । सेव्यमाने द्वारपेन्द्रविधिब्रह्माग्निमूर्तिभिः ॥ ४ ॥
त्रिभिर्निशाटनार्थैश्च पालकैर्द्वारमण्डले । प्रयागाख्ये शुचिक्षेत्रे मद्गुज्योतिष्मतीयुते ॥ ५ ॥
परापरमहापीठं संश्रितं श्रीनवात्मकम् । देवेशमर्चयेद् देवं गन्धपुष्पाक्षतादिभिः ॥ ६ ॥
श्रीमहार्थं तथान्यं च श्रीविद्यादिक्रमेण च । एतत्सर्वं समानं स्यान्द्रीशम्भोस्तु नवात्मकम् ॥ ७ ॥
धूपदीपौ प्रदर्श्याथ बहुव्यञ्जनसंयुतम् । नैवेद्य षड्रसोपेतं पुरतः स्थाप्य देशिकः ॥ ८ ॥
अन्नपूर्णेश्वरीन्यासं ध्यानं कुर्याद्यजेत् पुनः । ........... .... .. ..... .... ... ... ॥

ह्रीं भुवनायै नमः । श्रीं कमलायै नमः । क्लीं सुभगायै नमः । ॐ परविद्यायै नमः । मूलाधारहृद्भ्रूमध्यब्रह्मरन्ध्रेषु विन्यसेत् ।

ब्रह्मरन्ध्रादिब्राह्म्यादिन्यासं कुर्यात् स्वदेहके । नैवेद्यं भावयेत् पद्मे वसुपत्रे सकर्णिके ॥ १ ॥
त्रिकोणं चाथ तन्मध्ये परदेवीं विभावयेत् । भुवनाद्यास्तथा कोणेष्वथ दक्षेतरेषु च ॥ २ ॥
ब्राह्म्याद्याश्चाष्टपत्रेषु न्यासवत् सर्वमर्चयेत् । नैवेद्यं सपरिवाराया देवदेव्योः समर्पयेत् ॥ ३ ॥
सौभाग्यदेवतायास्तु स्वनैवेद्यं समर्चयेत् । ...... .. ...... .... . ...... . .... ॥

तदीयवलिं वृत्तचतुरस्रमण्डले, व्यापकमण्डलाय नम इत्यभ्यर्च्य, ॐह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा, अनेन बलिं दत्त्वा गण्डूषादिराजोपचारान् । "तत्त्वत्रयविशुद्धात्मा स्वीकुर्याद्विधिपूर्वकम्" ॥ ॐ ऐं ह्रीं अघोरे ह्रांम ॐ आत्मतत्त्वं शोधयामि स्वाहा । ॐ ह्रां परमघोरे हुं घोररूपे ह्रें घोरमुखि भीमभीषणे वमपिब हेरुरुद रर ह्रीं ह्रं फ्रैं हसरौं विद्यातत्त्वं शोधयामि स्वाहा । ॐ सर्वतत्त्वसमष्टिसर्वं (शिव) तत्त्वं शोधयामि स्वाहा ।

तत्त्वत्रयविशुद्धात्मा पूर्णपात्रत्रयं पुनः । गुरुभैरवशक्तिभ्यो निवेद्याथ स्वयं पुनः ॥ १ ॥
स्वकीयानाहूतान्यांश्च पूजयेच्च यथाविधि । ... ................... .... .. .. ... ॥

इति सृष्टिपूजा ॥

अथ संहारपूजार्थं श्रीनाथं पूजयेत् त्रिशः । तदनुज्ञामवाप्याथ पूर्ववत् पार्थिवाश्रितः ॥ १ ॥
मानमान्तं क्रमान् कृत्वा तत्तत्क्रमफलं लभेत् । आज्ञाद्याधारपद्मेषु चतुष्कादिक्रमार्चनम् ॥ २ ॥
तत्तत्स्थानेषु संपूज्य यतः पञ्चक्रमात्ततः । अर्चयेदुक्तमार्गेण श्रीगुरोरुपदेशतः ॥ ३ ॥
चूलीमूले परशम्भुः शाम्भवी योनिमध्यतः । षोडशान्ते परा पूज्या भा पूज्या चूलिमूलके ॥ ४ ॥

---

१ 'सर्वतत्त्व ॐ शोधयामि' ग पाठ ।

चिन्मनोमन्दिरोद्देशे महा नाभितले स्मृता । कन्दे चेच्छा मेढ्रे सृष्टिः स्थितिर्मेदसि संस्थिता ॥ ५ ॥
तिरोधा नासिकाग्रे तु मुक्तिं शूलपथे श्रयेत् । ज्ञाना पृष्ठाग्रके पूज्या सर्वा योनिनिले स्मृता ॥ ६ ॥
असती लम्बिकामूले सदसती नसाश्रये । क्रिया च लिङ्गमूले तु अण्डे आत्मावती श्रयेत् ॥ ७ ॥
लिङ्गाधो विषयेच्छा तु गोचरी चर्ममालके । लोका नेत्रान्तरे वेदा संचिन्त्योदरमध्यतः ॥ ८ ॥
कुण्डली नाभिमूले तु सौम्यगणुम्मणानिले (?) । जीववायुप्राणसूत्रास्पदकोदण्डमध्यतः ॥ ९ ॥
मातृका कर्णिकासूत्रे जिह्वायां स्यादनामिका । वर्णावती च जिह्वाग्रे स्वरवर्णाश्च तालुके ॥ १० ॥
वर्गजा ओष्ठयोः पूज्याः संयोगा दन्ततालुके । कण्ठोर्ध्वे मन्दरवर्ता नित्यं पूज्या प्रकीर्तिता ॥ ११ ॥
ततः परं वामभागे मण्डलं चतुरस्रकम् । ... ... ... ॥

चतुर्दलपद्मं विभाव्य,

तन्मध्ये चिन्तयेद् देवीं ललितां श्यामविग्रहाम् । कराभ्यां दक्षवामाभ्यां पद्मं नीलोत्पलं तथा ॥ १२ ॥
बिभ्राणां कुलचण्डं च ध्यानानेन प्रपूजयेत् । ... ... ॥

ऐँ श्रीं कुलचण्डाय श्रीं ऐँ, इति खण्डबलिं दद्यात् ।

तर्पयेन्मूलविद्याभ्यां प्रत्येकं सप्तमप्रधा । श्रीगुरोः पादुकां स्मृत्वा सप्तवारं च तर्पयेत् ॥ १ ॥
ततः पात्रं समुद्धृत्य कराभ्यां मस्तकावधि । अहन्तेदन्तयोरैक्यप्रतिपत्त्या निवेदयेत् ॥ २ ॥
सर्वावरणमध्यस्थं ब्रह्मरन्ध्रे लयं नयेत् । ... ... ॥

नानागोत्रजातिश्रीचर्याधिकार-श्रीपत्राधिप्रभुनाधिकार-षट्कद्विनवद्वादशषोडशपञ्चाशच्चतुरशीतिसिद्धभूतवर्तमाननभविष्यतादिगुरुनाथपादुका, इत्यादिस्थाने लय ।

सर्वं व्याहृतिसंस्थानो यद्देव्याः शाम्भुशक्तयः । ... ... ॥

नमो मम मनसि स्थिताय नाथाय सत्कर्मकार्यपराय स्वाहा ।

चर्यां पवित्रमित्यादिवेदमागममेव च । शाम्भवं चरणं ध्यात्वा सच्चिदानन्दलक्षणम् ॥ १ ॥
पवित्रं परमं साक्षात् पुराणं परमामृतम् । येन पूता महात्मानः क्षणात् संसारसागरात् ॥ २ ॥
समुत्तीर्य परानन्दं भुञ्जते परशाम्भवम् । तस्मिंश्चित्तलयं कृत्वा तद्भूयोऽहमिति स्मरन् ॥ ३ ॥
एतद्रहस्यमत्यन्तं वैदिके शाम्भवेऽपि च । एतद्गुरुमुखाज् ज्ञात्वा न भूयो भुवि जायते ॥ ४ ॥
आबध्य कमठीमुद्रां पुनर्योगं समभ्यसेत् । इत्यानन्दयतः पूर्वं प्राणबुद्धिलयो भवेत् ॥ ५ ॥

इति श्रीषडन्वयशाम्भवरश्मिपूजाक्रमः ॥

अथ नवदुर्गाविधानं रुद्रयामले । श्रीईश्वर उवाच ।

अथ वक्ष्ये सुरेशानि नवदुर्गाविधानकम् । यज् ज्ञात्वा साधकः सर्वः षट् कर्माणि प्रसाधयेत् ॥ १ ॥
शान्तिः पुष्टिस्तथा वश्यं मारणोच्चाटकर्मणी । आकर्षणं तथा केचित् षट् कर्माणि नियोजयेत् ॥ २ ॥
मार्कण्डेयपुराणोक्तं देवीमाहात्म्यमुत्तमम् । मूलमन्त्रेण पुटितं जपन् वाञ्छितमाप्नुयात् ॥ ३ ॥

अत्र मूलमन्त्रं प्राग्दुर्गाप्रकरणोक्तनवार्णकं श्रीविद्यासंवलितं यथा—ऐँह्रींश्रीं क्एईलह्रीं चामुण्डायै हसकह-

---

1 'रसनाश्रये' ग पाठ ।

लक्ष्मी विधे सकलहीं । एवं श्रीविद्यासंवलितनवार्णमन्त्र देवीमाहात्म्यपरस्याद्यन्ते संपुटत्वेन संयोज्य देवीमाहात्म्य पठेदित्यर्थः । तथा—

शतमादौ शतं चान्ते जपेन्मन्त्रं नवाक्षरम् । चण्डीसप्तशतीजाप्ये संपुटोऽयमुदाहृतः ॥ ४ ॥
सकामं संपुटं जाप्यं निष्कामं संपुटं विना । आश्विनस्य सिते पक्षे तृतीयायामुपक्रमेत् ॥ ५ ॥
आमध्यरात्रं प्रजपेद्रवेरुदयतः क्रमात् । एवं मूलमनुं जप्त्वा ततः सप्तशतीं पठेत् ॥ ६ ॥

मूलमनु विद्यायुक्तं, पाठोऽपि विद्यायुक्तनवार्णमन्त्रसंपुटितदेवीमाहात्म्यस्य । संपुटक्रमस्तु प्रागुक्तः "शतमादौ शतं चान्ते" इत्यादि ज्ञेयम् । तथा—

अष्टम्यन्ते जपेल्लक्षं निराहारो जितेन्द्रियः । संपूज्य दिनशो देवीं ततो होमं समाचरेत् ॥ ७ ॥

अत्र षड्दिनेषु यथा लक्ष पूर्ण भवेत्तथा जपेदिति ।

दशांशतो भक्तियुतः पायसैः सर्पिषा तिलैः । ब्राह्मणान् भोजयेत् पश्चात् कुमारीश्च प्रभोजयेत् ॥ ८ ॥
इष्टार्थं लभते मन्त्री नात्र कार्या विचारणा । प्रथमं चरितं प्रोक्तं मधुकैटभनाशनम् ॥ ९ ॥
द्वितीयं चरितं प्रोक्तं महिषासुरघातनम् । तृतीयं चरितं शुंभनिशुंभहरणं तथा ॥ १० ॥
प्रथमस्य चरित्रस्य मुनिर्ब्रह्मा समीरितः । गायत्रं छन्द आख्यातं महाकाली तु देवता ॥ ११ ॥
वाग्भवं बीजमाख्यातमग्निस्तत्त्वं महेश्वरि । धर्मार्थे विनियोगः स्याद्वाग्बीजोक्तं समाचरेत् ॥ १२ ॥

षडङ्गं ध्यानमिति शेषः ।

द्वितीयस्य चरित्रस्य मुनिर्विष्णुरुदीरितः । छन्द उष्णिग् महालक्ष्मीर्देवतात्र समीरिता ॥ १३ ॥
हृल्लेखा बीजमुदितं वायुस्तत्त्वं महेश्वरि । विनियोगोऽर्थसंप्राप्त्यै हृल्लेखोक्तं समाचरेत् ॥ १४ ॥
उत्तरस्य चरित्रस्य ऋषी रुद्रः समीरितः । त्रिष्टुप् छन्दो महत्पूर्वा देवतात्र सरस्वती ॥ १५ ॥
बीजं तु कामराजं स्याद्वह्निस्तत्त्वं समीरितम् । कामाप्त्यै विनियोगः स्यात् कामराजोक्तमाचरेत् ॥ १६ ॥
एवमृष्यादिकं स्मृत्वा प्राग्वद् ध्यात्वा समाहितः । ध्यानपूर्वं पठेच्चण्डीं सुस्पष्टपदवर्णकाम् ॥ १७ ॥
एवं यः कुरुते देवि न दुःखं प्राप्नुयात् क्वचित् । धनैर्धान्यैर्यशोभिश्च सुभगैः पुत्रपौत्रकैः ॥ १८ ॥
संयुक्तः सुचिरं जीवेद्विद्यावान् स शतं समाः । प्रथमं चरितं देवि सृष्टिरूपं न संशयः ॥ १९ ॥
द्वितीयं स्थितिरूपं स्यात् तृतीयं लयरूपकम् । पूर्वोक्तविधिना साधि साधकस्तु सुबुद्धिमान् ॥२०॥

अत्र सृष्ट्यन्तता स्थित्यन्तता संहारान्तता । तत्फलानि चाधमभेदेन प्राग्वद्बोध्यानि ।

असाध्यं साधयेच्छीघ्रं यदि कार्यं न सिध्यति । पाठमात्रेण सिध्यन्ति नात्र कार्या विचारणा ॥ २१ ॥
देव्यालये शिवागारे पठेद् देवि यजेत् तदा । दीपं दत्त्वा घृतेनैव जपेन दशकेन च ॥ २२ ॥
धूपयेद् गुग्गुलैर्देवीं मनसा चिन्तयन् सदा । दशावृत्त्या सदा नित्यं शुचिर्भूत्वा समाहितः ॥ २३ ॥
अधःशायी हविष्याशी पुरश्चरणरूपतः । शतावर्तं जपेदादौ पुरश्चरणसिद्धये ॥ २४ ॥
तद्दशांशेन जुहुयान्मूलमन्त्रेण साधकः । नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ २५ ॥
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् । अनेन वा मजुहुयाद् द्रव्यैः प्राक् समुदीरितैः ॥२६॥

पतिरेभ्रपालेभ्यो बलीनुत्सृज्य सर्वभूतबलिं तन्मन्त्रेणोत्सृज्य, ततो नैवेद्यपात्रं साधारं साम्भं संस्थाप्य धूपदीपौ प्रदर्शयेत्, अस्त्रेण संप्रोक्ष्य गन्धादिभिरभ्यर्च्य धेनुमुद्रां प्रदर्श्य "ऐं जगद्ध्वनिमन्त्रमातः स्वाहा" इति घण्टां संपूज्य वामकरे गृहीत्वा वादयन् नीचैर्धूपं समर्पयेत् ।

[1] वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

इति पठित्वा समर्पयेत् ।

सुप्रकाशो महादीपः सर्वत्र तिमिरापहः । सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

इत्युच्चैर्दीपं समर्पयेत् । ततो नैवेद्यमस्त्रेण संप्रोक्ष्य, त्रिशूलमुद्रया संरक्ष्य, वाय्वादिबीजैः शोषणादिकं विधाय, सुरभिमुद्रयामृतीकृत्य, गन्धार्घ्यरलंकृत्य सद्वत्तरनैवेद्यं स्वाहान्तेन मूलेन समर्पयेत् ।

[2] नैवेद्यं षड्रसोपेतं पञ्चभक्ष्यसमन्वितम् । सुधारसमहोदारं शिवेन सह गृह्यताम् ॥

इत्युच्चैर्विरमेत् पनिष्ठानामायोगात् । तत्र वामकरेण विकचोत्पलनिभां ग्रासमुद्रां प्रदर्श्य दक्षहस्तेन प्राणादिमुद्राः प्रदर्शयेत् । प्राणाय स्वाहा, इत्यादिना समर्प्य स्वगुरुक्रमेण तत्त्वत्रयमन्त्रैः आत्मतत्त्वाधिपतिः श्रीकामेश्वरी तृप्यतु । एवं विद्यातत्त्वाधिपतिः, शिवतत्त्वाधिपतिः, सर्वतत्त्वाधिपतिः । ततः कामेश्वरस्तृप्यतु इत्यादि चतुस्तरैः संतर्प्य, ऐं परायै श्रीमहात्रिपुरसुन्दर्यै नैवेद्यं स्वाहा । क्लीं परायै० । सौः परायै० । इति नैवेद्यं समर्प्य, "अमृतोपस्तरणमसि स्वाहा" इत्युक्त्वा प्राणादिमुद्राः प्रदर्श्य, प्राणाय स्वाहा इत्यादि पञ्चाहुतीर्निवेद्य, जवनिकामध कृत्वा मूलमन्त्रं स्मरन् यावत् तृप्तिभोजनं तावदाकाङ्क्षमाणः क्षणं विश्रमेत् । अत्र वटुकादिबलिर्नैवेद्यात् पूर्वमित्यस्मत्संप्रदायः । केचित्तु नैवेद्योत्तरं वदन्ति । तत्तु यथासंप्रदायं कार्यमिति । मध्ये पानीयमुत्तरापोशनं करशुद्ध्यादिमुखवाससमर्पणान्तं कुर्यात् । अत्र नैवेद्यसमर्पणानन्तरं नित्यहोमं कृत्वा बलितर्पणादि कुर्यात् । ततः कुलदीपं निवेदयेत् । शालिगोधूमादिपिष्टेन गुडेन सजीरकेण शालिव्रतायेन सार्धं त्रिकोणाकारान् डमरुकरूपेण नव पञ्च त्रीन् वा विधाय घृतेन पाचयित्वा, ताम्रादिभाजनेऽष्टदलादि तत्संख्यया मण्डलं विधाय, अष्टदलं चेद्वशिन्याद्यष्टकं मध्ये देवीं यजेत् । त्रिकोणं चेद् गुणत्रयात्मिकां परेश्वरीं यजेत् । गुह्यमालिनीयद्वा, पञ्च चेत् कामेश्वर्यादि भैरवीर्यजेत् । "ऐं महादीपतेजोवति अमोघाज्ञाप्रभामालिनि भगा" इयं विद्यया फलपुष्पताम्बूलसुवर्णादीनि निक्षिपेत् । "ऐं महादीपतेजोवति अमोघाज्ञाप्रभामालिनि भगा" इयं गुह्यमालिनी ॥ ततो रत्नेश्वर्याभिमन्त्र्य पूजयित्वा दीपभाजनमुद्धृत्य सामयिकश्लोकद्वयं पठन् देव्युपरि नवधा पञ्चधा त्रिधा वा भ्रामयेत् ।

अन्तस्तेजो बहिस्तेज एकीकृत्य निरन्तरम् । अथ ऊर्ध्वक्रमेणैव कुलदीपं निवेदयेत् ॥

समस्तचक्रचक्रेशीयुते देवि नवात्मिके । आरात्रिकमिदं भद्रे गृहाण मम सिद्धये ॥

इत्याभ्यां श्लोकाभ्यां लवणनिम्बपत्रादिना दृष्टिमुत्तार्य चतुस्तालपण्डादिभिरपि । ततो मूलेन प्राणायामत्रयं कृत्वा, अस्याः—शिरसि आनन्दभैरवाय ऋषये नमः । मुखे पङ्क्तिश्छन्दसे नमः । हृदये श्रीत्रिपुरसुन्दर्यै देवतायै नमः । गुह्ये वाग्भवकूटबीजाय नमः । पादयोः शक्तिकूटशक्तये नमः । नाभौ कामराजकूटकीलकाय नमः । इति विन्यस्य मम सर्वाभीष्टसिद्ध्यर्थे विनियोगः इति कृताञ्जलिरुक्त्वा, बालाबीज-

---

१ 'जगद्ध्वनि' ख. पाठ. । २ 'परेशीं' ग पाठ ।

अर्धद्विरावृत्त्या पञ्चदशीकूटत्रयद्विरावृत्त्या महाषोडशीखण्डत्रयद्विरावृत्त्या च त्रिधा षडङ्गन्यासत्रयं विधाय, सर्वज्ञायै हृदयाय नमः इत्यादिमन्त्रैरपि षडङ्गन्यासं विधाय मूलविद्यान्यासान् कुर्यात् । ज्ञानार्णवे—"ततो न्यासादिकं कुर्यात् संनादं तु शरीरके" । इत्यारभ्य "कुमार्या त्रिपुरेशान्या षडङ्गानि च पूर्ववत्" । इत्यन्तमुक्त्वा,

अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम् । संपूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ॥ १ ॥
सचरसुधाषोडशार्णां महासौभाग्यदां न्यसेत् । वामामदेशे सौभाग्यदण्डिनीं भ्रामयेत् ततः ॥ २ ॥
रिपुजिह्वाग्रहां मुद्रां पादमूले प्रविन्यसेत् । त्रैलोक्यस्य लसेहं कर्ता ध्यात्वैवं तिलकं न्यसेत् ॥ ३ ॥
संपूर्णामेव वदने वेष्टनत्वेन विन्यसेत् । पुनः पूर्णां च वदने गलोर्ध्वे विन्यसेत् ततः ॥ ४ ॥
पुनः संपूर्णया देहे वेष्टनेन च विन्यसेत् । व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाभिवन्द्य च ॥ ५ ॥
श्रीविद्यापूर्णरूपोऽयं न्यासः सौभाग्यवर्धनः । ब्रह्मरन्ध्रे क्षिपेद् देवि मणिबन्धे न्यसेत् ततः ॥ ६ ॥
ललाटेऽनामिकां कुर्यात् षोडशार्णां स्मरन् बुधः । त्रैलोक्यस्य तु कर्ताहमिति सम्यग् विभावयेत् ॥ ७ ॥
संमोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः । त्रैलोक्यमरुणं ध्यायन् श्रीविद्यां मनसि स्मरन् ॥ ८ ॥
पादयोर्जङ्घयोर्जान्वोः कट्योरन्धुनि मस्तके । नाभौ पार्श्वद्वये चैव स्तनयोरंसयोस्तथा ॥ ९ ॥
कर्णयोर्ब्रह्मरन्ध्रे च वदनेऽन्धुनि पार्वति । ततः कर्णप्रदेशे तु करवेष्टनयोः क्रमात् ॥ १० ॥
संहारोऽयं महान्यासो बीजैः षोडशभिः क्रमात् । श्रीविद्यायाः षोडशार्णन्यासैर्विश्वेश्वरो भवेत् ॥ ११ ॥

इत्यादिरीत्या मन्त्रन्यासान् विधाय प्राग्वद् ध्यात्वा, श्रीगुरुकुरुकुल्लादिस्मरणपूर्वकं शतादिसंख्यया मूलविद्यां जप्त्वा गुह्यातिगुह्येति च निवेदयेत् । भूयोऽपि मुद्रानवकं प्रदर्श्य सहस्रारयां पुष्पाञ्जलिं दत्त्वा स्तोत्रैः स्तुत्वा बहुशः प्राणायामादिभिः प्रार्थयेत् ॥

ततः श्रीचक्रं चतुराम्नायत्वेन विभाव्य तत्तदाम्नायविद्याभिर्न्यस्तसमस्तबालया वा पूजयेत् । तद्यथा—चतुरश्रषोडशाष्टदलमण्डलं सृष्ट्यात्मकं पूर्वाम्नायं विभाव्य, तदीश्वरीं रुद्रशक्तिं यजेत् । मन्वश्रं द्विदशारं स्थितिरूपं दक्षिणाम्नायं मत्वा तदीश्वरीं रुद्राणीं यजेत् । अष्टारं त्र्यश्रं संहाररूपं पश्चिमाम्नायं मत्वा तदीश्वरीं कुब्जिकां यजेत् । बिन्दुचक्रात्मकमनाख्यात्वेन विभाव्य उत्तराम्नायं मत्वा तदीश्वरीं कालसङ्कर्षिणीं यजेत् ॥

ततश्च षड्दर्शनात्मकमनुसन्धाय तैस्तन्मन्त्रैरर्चयेत्[3] । भूगेहत्रयं बौद्धजैनचार्वाकदर्शनरूपं मत्वा तदीश्वरीं वज्रतारां यजेत् । "ओं तारे तुतारे तुरे स्वाहा" । इयं वज्रतारा ॥ षोडशाष्टदले वैदिकदर्शनं मत्वा सचतुर्थपादां सशिखां गायत्रीं यजेत् । मन्वश्रे सौरदर्शनं विभाव्य सौराष्टाक्षरेण सूर्यं यजेत् । द्विदशारे वैष्णवदर्शनं मत्वा नारायणाष्टाक्षरेण विष्णुं यजेत् । अष्टारे शाक्तदर्शनं मत्वा बालया यजेत् । त्रिकोणं सान्तरालं शैवदर्शनमनुसंधाय "ह्रौं नमः शिवाय हसौः नमः" इत्यनेन शिवं यजेत् ॥

ततः श्रीचक्रं सिद्धान्तरूपं मत्वा तत्तत्सिद्धान्तविद्याभिरर्चयेत् । त्रैलोक्यमोहनचक्रं सृष्टिसृष्ट्यात्मकं मत्वा चार्वाकसिद्धान्तं यजेत् । चार्वाचूं चमलवरयूं चार्वाकदर्शनाधिदेवतायै श्रीचण्डिकायै नमः ॥ सर्वाशापूरकचक्रं सृष्टिस्थित्यात्मकं मत्वा बौद्धसिद्धान्तमर्चयेत् । तद्यथा—ॐ नवसहस्रकुलहरीं बौद्धदर्शना-

१ 'इमरेत्' ग. पाठ. । २ 'स्वय' ग पाठ. । ३ 'ततस्तन्मन्त्रैः' क पाठ ।

धिदेवतायै तारायै नमः ॥ सर्वसंक्षोभकं चक्रं सृष्टिसंहारात्मकं मत्वा जैनसिद्धान्तमर्चयेत् । तद्यथा-ऐंआं-श्रींह्रींक्लींर्झ्रीं जैनदर्शनाधिदेवतायै अर्हन्तायै नमः ॥ सर्वसौभाग्यदायकं चक्रं स्थितिसृष्ट्यात्मकं मत्वा सांख्य-सिद्धान्तमर्चयेत् । ऐं अइउऋलृ सांख्यदर्शनाधिदेवतायै श्रीमूलप्रकृत्यै नमः ॥ सर्वार्थसाधकं चक्रं स्थिति-रूपं मत्वा प्राक् गायत्र्या वैदिकसिद्धान्तमर्चयेत् । "परो रजसेऽसावदोम्" इति चतुर्थं पादः ॥ सर्व-रक्षाकरं चक्रं स्थितिसंहाररूपं मत्वा सौरसिद्धान्तमर्चयेत् । श्रींह्रींक्लीं ॐघृणिश्रीं ॐह्रींह्रीं श्रीं ॥ सर्वरो-गहरं चक्रं संहारसृष्टिरूपं ध्यात्वा ॐ नमो नारायणायेति वैष्णवसिद्धान्तं यजेत् ॥ सर्वसिद्धिप्रदं चक्रं संहारस्थित्यात्मकं शाक्तसिद्धान्तं चालया शक्तिदर्शनाधिदेवतायै श्रीत्रिपुरायै नमः इति यजेत् ॥ सर्वानन्द-मयचक्रं संहारसंहृतिरूपं मत्वा शैवदर्शनं यजेत् । प्रासादपुटितषडक्षर्या शैवदर्शनाधिदेवतायै श्रीब्रह्मवि-द्यायै नमः ॥ बिन्दौ व्योम्नि महार्थानाख्यामाम्नाये सर्वात्मनि शिवाद्वयमनुसन्धाय ज्ञानदर्शनं यजेत् । ऐं हसक्षमलवरयूं महाचण्डयोगेश्वराय सर्वदर्शनसमयाधिदेवतायै कालसङ्कर्षिण्यै नमः । इति प्रदक्षिणनमस्का-रादिभिः परितोष्य, जानुभ्यामवनिं गत्वा स्वाभिमतं प्रार्थ्य पञ्चमुद्राभिर्नुत्वा,

चतुरश्रं च मत्स्यं च मुद्गरं गोमुखं तथा । योनिमुद्रेति पञ्चैता गुरुदेवाभिवन्दने ॥

इति । ततः

रश्मिरूपा महादेव्या अत्र पूजितदेवताः । श्रीसुन्दर्यङ्गलीनास्ताः सन्तु सर्वसुखावहाः ॥

इति देव्यै पुष्पाञ्जलिं दत्त्वा, संहारमुद्रया

गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि । यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥

इति पुष्पं गृहीत्वाघ्राय ब्रह्मरन्ध्रं नीत्वा

तिष्ठ तिष्ठ परे स्थाने स्वस्थाने परमेश्वरि । यत्र ब्रह्मादयो देवाः सुरास्तिष्ठन्ति मे हृदि ॥

इति पुष्पं हृदयपर्यन्तं नीत्वा मुक्तेऽक्षिणि देवतां स्वहृद्गुहास्य, प्राग्वत् पात्रोद्वासनमपि विधाय श्रीगुरुं प्रणमेत् । ततो महापात्रमन्त्रेण जलं भूमौ निक्षिप्य, ऐशान्यां दिशि नैवेद्यशेषं निर्माल्यपुष्पं निक्षिप्य "ऐं नमः उच्छिष्टचण्डालि मातङ्गि सर्ववशङ्करि स्वाहा" इति तत्र जलमुत्क्षिप्य,

व्योमचक्रसमारूढे भुवनान्तरचारिणि । चरुकं देहि मे देवि प्रसादं कुरु सिद्धिदे ॥

इत्यनेन सचरुकं दीपं गृहीत्वा

देहस्थाखिलदेवता गजमुखाः क्षेत्रेश्वरा भैरवा
योगिन्यो बटुकाश्च यक्षपितरो वेतालकाश्चेटकाः ।
अन्ये दिक्षुचरास्तथैव खचरा भूताः पिशाचा ग्रहा-
स्तृप्ताः स्युः कुलपुत्रकस्य पिबतः पानं सदीपं चरुम् ॥

इत्यनेन मूलमन्त्रमुच्चरन् तदात्मसात् कुर्यात् । ततो योगिनीयोगिभिर्वृतः किञ्चित्कालं नीत्वा मिश्रचरण-विधया स्वात्मानं सच्चिदानन्दमयं परामृश्य सुखीभूयात् इति श्रीविद्यापद्धतिः ॥

अथ सहस्राक्षर्यो लिख्यन्ते । तास्तु यामल-महार्णवोक्तभेदेन नानाविधाः सन्ति । तत्रादावुपस्थान-सहस्राक्षरी । ऐं नमो भगवति त्रिपुरसुन्दरि दुर्गतितारिणि क्ष्मैरीं श्रीं कर २ विसर २ नृत्य २ वद २ वाग्वादिनि स्वाहा ह्रीं नमः क्लीं नमः श्रींह्रींक्लीं नमः सुरासुरवन्दिते सकलजनक्षोभिणि श्रींश्रींश्रीं

१ 'ऐंक्लींह्रींश्रींग्लौंह्रीं' ग. पाठः । २ 'दुर्गतारिणि' ख. पाठः । ३ 'ध्रूं' क. पाठः । ४ 'श्रीं' ग. पाठः । ५ 'जगत्' क. पाठः ।

कारिणि द्रांद्रां द्राविणि मोंमों मोहिनि स्तंस्तं स्तम्भिनि आंआं आकर्षिणि परमसुभगे नम केम-लवासिनि रस२ वर्त्तवर्तिनि हा३ करि हीं३ कारि हो३ कारिके काकां काकिनि रांरा राकिणि डाडां डाकिनि हाहा हाकिनि ऐं शाङ्करि गन२ विग्र२ भ्रम २ यदयद मत्यसत्य उत २ मालिनि महामाये तत्त्वविग्रहे अरूपे अमले विमलेऽजिते अपराजिते मर्द २ हर२ सहर २ ऊँह्रींपे कुरु २ लेप २ किटि ॐजूसः सौ क्लीं ऐंश्रीं नद २ नादबीजे श्रांश्रींश्रूंश्रैंश्रौंश्र ग्रांग्रींग्रूंग्रैंग्रौंग्रः य्रांय्रींय्रूंय्रैंय्रौंय्र रांरींरूंरैंरौंर. लां-लींलूंलैंलौंल. ब्रांब्रींब्रूंब्रैंब्रौंब्र थ्रांथ्रींथ्रूंथ्रैंथ्रौंथ्र प्रांप्रींप्रूंप्रैंप्रौंप्र म्रांम्रींम्रूंम्रैंम्रौंम्र ह्रांह्रींह्रूंह्रैंह्रौंह्र. च्रांच्रींच्रूंच्रैं-च्रौंच्र. गौरि रुद्रदयिते वज्रिणि वज्रनायिके कपालमालाधरे प्रेतासननिवासिनि सर्वतत्त्वोपनारे अयतर २ गर्ज २ शोषय २ सर्वमन्त्रान् ग्रस २ सर्वदुष्टान् मर्द २ सर्वयन्त्रान् भञ्ज २ सर्वदुर्गं तपतप तापय तापय तारे तारिणि परविद्यां छिन्धि छिन्धि परकाय प्रविश २ धञ्जिणि गोंगों गोचरि खेंखें खेचरि भूंभूं भूचरि हंसवादे हस २ निष्ठ २ बन्धय २ धारय धाम्य ऊ(नु)र्णामणि मोचय २ विमोचय २ विमोचनि पश्य २ हुंदाचे मेरुमन्दरसकाशे महाविद्येश्वरि वाचं नियन्छ आच्छादिनि सरस्वति महाश्वेते किणिविचे अर्ककोटिसहस्रमालिनि पुरपुर द्रुंम २ अनन्तक्षोभकारिणि रणे वज्रादिकर्तरि विद्याविनोदिनि त्वर २ त्वरिते वद २ क्रन्दय २ सनामय २ मदिरानन्दघूर्णिते कामेश्वरि गांगींगूंगैंगौंग कन्दर्पमदविह्वले स्फुरद्योनिचक्रे भगवति भगमालिनि ईश्वरचक्रकपालडमरुकधारिणि महाभैरवि वसुधारे वसुमति धेंगिणिधरे वशय २ कर्मधारिणि कामेशि जिह्वया वद २ मनसा रंभे २ क्रन्द वेस २ बिन्दुप्रिये [11]ह्रू ५ रद शारदचन्द्राकानिकाशे शारदे विद्या-दानविशारदे क्लीं गणनायिके आनन्दमयविग्रहे गृहीतपूर्णकपाले त्वेलेनित्ये ह्रादिनि नित्यक्लिन्ने मदद्रवे स्वाहा सांसांतु सरस्वत्यै नम मदिरे मधुमति महाभोगसुभगे भगमाले गुरु २ चुरु २ धुन २ स्फुर २ स्फोटय २ घण्टारवेण निरन्तरपरबलभेदिनि फ्रें कुब्जिकायै ह्रींह्रीं नजणडमे अघोरमुखि क्रिणि २ विच्चे ऐंह्रींश्रींफ्रें-ह्रींहुंफट् सर्वज्ञे जंभ २ जन्मजरामरणदारिद्र्यघातिनि सर्वसिद्धिनिधाने महाभयधारिणि ऊँहंस' हुंफट् विद्येश्वरि जूंजींजूंजैंजौंजू [20]ह्रौंश्रींसौ ग्लौंग्लौं कुलविद्याविणि विद्रुतविद्रुमप्रभे वर्म्रा हैंसौं चण्डि चण्डे-श्वरि महाण्डमालाधारिणि बन्धूकशोणाधरे त्रैलोक्यसत्ये नम प्रसीद २ [26]ऐंश्रींफ्रेंसौ. ऐंह्रींश्रींश्रीमहात्रि-पुरसुन्दरि स्वाहा ॥ इति त्रिपुरसुन्दर्युपस्थानसहस्राक्षरी ॥ (त्रैपुरीनित्यापादितमिद्धा शुभदा साधकानाम् ।)

अथ प्रस्तारसहस्राक्षरी । तत्र—

मनुश्चन्द्रः कुबेरश्च लोपामुद्राथ मन्मथः । अगस्त्यो नन्दिसूर्यो च इन्द्रः स्कन्दः शिवस्तथा ॥

क्रोधभट्टारको देव्या द्वादशैते उपासकाः । सर्वप्रस्तारसहिता महस्रार्णाधुनोच्यते ॥

श्रीविद्याजपसंपत्त्यै सर्वकामफलाप्तये । ·· ·· . . . ॥

सुरासुरवन्दितचरणारविन्दे जपाकुसुमनिभे योगिनीगणसेविते मधुमदमुदितमानस संध्यावर्णदुकूलवसने

१ 'कल २' ग पाठ । २ 'पदिवावर्तिनि' ग पाठ । ३ 'हू' क पाठ । ४ फ्रें शाङ्करि भकगलक्ष्मीरस भ्रम २' ग पाठ । ५ 'किटि' क पाठ । ६ 'ह्रांह्रींह्रूंह्रैंह्रौंह्र' ग पाठ । ७ 'मत्या' ग पाठ । ८ 'वादे' क पाठ । ९ 'नियच्छ यच्छ' ग, पाठ । १० 'दुह' वा 'चुह' क पाठ । ११ 'मतोधारिणि' ग, पाठ । १२ 'दामिनि' ग पाठ. । १३ 'रस' ग पाठ । १४ 'वसु' ग पाठ । १५ 'हु ३' ग पाठ । १६ 'मद' ग, पाठ । १७ 'ज्वलितिके' ग पाठ । १८ 'मोद' ग पाठ. । १९ 'मगले' क पाठ. । २० 'हूं' ग पाठ । २१ 'ह्राद्' क पाठ । २२ 'भञ्ज' ग पाठ । २३ 'ह्रांह्रींह्रूंह्रैंह्रौंह्र.' क पाठः। २४ 'श्रींत्रींसौ चौश्रीं' ग, पाठ, । २५ 'हूंसौं' ग पाठ । २६ 'ऐंह्रींहांश्रींफ्रेंश्रीं' क पाठ. । २७ 'त्रिभुवनेश्वरि' क, पाठ. ।

सततमुदितमहामदे माणिक्यकिरणारुणे मन्त्रपवित्रविग्रहे बिन्दुनादरूपिणि सच्चिन्मात्रस्वरूपे हसां हसकलरीं हसौं. स्हौः. ह्सौः हसौ हसकएईलह्रीं हसकएईलह्रीं सहकएईलह्रीं नमो देवि आगच्छ सन्निधिं कुरु २ सर्वतो मां रक्ष २ वर्धय २ नन्दय २ स्थापय २ प्रापय प्रापय सर्वकार्याणि मम साधय पोषय ह्स्रां-ह्स्रीं ह्स्रूं ह्स्रैं ह्स्रौं ह्स्रः. सकलहएईलऐंह्रीं हसकएईलह्रीं नमो भगवति भगरूपे पापापहारिणि राजानं मे वशमानय विपदो दलय स्त्रीराकर्षयाकर्षय क्लेदय २ मनांसि क्षोभय २ मादय २ उल्लासयोल्लासय सौभाग्यं मे संपादय संपादय सौन्दर्यं मे जनय फट् हसहरं हसहरीं हसहरां हसहरं हसहरीं हसहरां ४ कए-ईलह्रीं हसकलह्रीं नमः कल्याणकारिणि लाक्षाभरणप्रभारञ्जितशरीरे रक्ताम्बुजनिषण्णे पाशाङ्कुशेक्षुचापकुसु-मबाणधारिणि चतुर्भुजे चन्द्रशेखरे चतुरङ्गे चतुर्वर्गफलप्रदे दिव्यमालालङ्कृतदिव्यदेहे मम सकलसमीहि-तानि साधय साधय स्फारय २ स्थिरय २ हसकलरं हसकलरीं हसकलरां हसकलरं हसकलरीं हसक-लरां ४ सहकलह्रीं सहकलरीं सहकलह्रीं नमो वरदे रेते सुरेते सत्ये नित्ये निरञ्जने जगत्क्षोभ (करे क्षोभ)कारिणि कमले कमनीयाङ्गे कलावति सुखानि मे परिपूरय राज्यं प्रयच्छ २ कीर्तिं वितारय २ परसैन्यं स्तंभय २ भेदय २ मर्दय २ च्छेदय २ उत्मादयोत्मादय हसकलह्रैं हसकलह्रीं हसकलह्रौं सकलह्रैं सकलह्रीं सकलह्रौं ५ सहसकलह्रीं सकलह्रीं नमः परमेश्वरि परमात्मस्वरूपे करुणामृतवर्षिणि द्राँद्रीँक्लीँ-ब्लूँसः मनोज्ञे मुखलायासे मणिकङ्कणपरिविचित्रितकुण्डलिनि कोमलाङ्गि अङ्कुशेनाकर्षयाकर्षय पाशेन बन्धय २ चापेन मोहय मोहय बाणेन भिन्धि २ च्छिन्धि २ डांडींडूंडैंडौंडः. सहकलरडैं सहकलरडीं सहकलरडौं सहकलरीं सहकलरीं सहस्कलह्रीं नमस्त्रिपुरे वादय २ त्रिपुरेश्वरि विघ्नेश्वरि वीरवन्दिते विद्याधरवीज्यमा-नचामरे विद्यादानविशारदे मदोद्याघूर्णनेत्रे त्रिनेत्रे श्रीत्रिपुरसुन्दरि डांडींडूंडैंडौंडः हसकलडैं हसकलडीं हसकलडौं हसकलडैं हसकलडीं हसकलडौं. सकलह्रौं सकलह्रीं नमः त्रिपुरवासिनि त्रिपुराश्रि देवि प्रपद्ये संप्र-पद्ये सदा प्रपद्ये शरणं प्रपद्ये शरण्ये शरणागतवत्सले मदने मदनदेहे सर्वजनहृदयहारिणि सर्वतत्त्वहृदयङ्गमे सर्व-भूतवशंकरि मम सर्वभूतानि वशमानयानय कामान् पूरय २ कीर्तिं दापय २ दुरितं खण्डय २ क्लेशं नाशय २ शत्रून् त्रोटय २ बन्ध छेदय २ मोक्षं कुरु कुरु ऐंह्रींश्रीं हसकलरडरहैं हसकलरडरह्रीं हसकलरडरहौं सैंहकलरडरहैं सैंहकलरडरह्रीं सैंहकलरडरहौं. हसकलह्रीं हसकलह्रीं हसकलह्रीं ऊँनमस्त्रिपुरमालिनि चिन्तितार्थविद्याविधा-यिनि वित्तदे ब्रह्मविष्णुरुद्रशङ्करसदाशिवपूजिते सुपूज्ये मम मनोरथान् पूरय २ समुद्रादुत्तारय २ अरिष्टं भञ्जय २ राजनीतिं स्थापय २ दुष्कर्माणि हन्त २ कृत्यां कर्तय २ ऐंह्रींश्रीं हसकलरडरहैं, हसकलरडर-ह्रीं, हसकलरडरहौं. हसकलरडरसहरीं ऐंह्रींश्रीं हसखफ्रें हसौं. त्रिपुरसिद्धे त्रिपुरानन्दयोगेश्वरि कुलाकुलमहारूपे अरुणामृतमहारूपे हसक्षमलवरयीं सकलनृपवशङ्करि सर्वसंपत्तिकारिणि सर्वैश्वर्यप्रदे सर्व-दुःखविदारिणि सर्वेशे हसकलरडसहरडैं, हसकलरडैंसहरडीं, हसकलरडैंसहरडौं., हसकलरडैंसरडौं., हसैंकलरडसरडीं हसकलरडसरडैं, कएईलह्रीं हैंसकहलह्रीं सच्चिदानन्दमये बिन्दुचक्रस्थे परब्रह्मस्वरूपिणि परमात्मशक्तिमन्त्रचक्रेश्वरि सर्वमन्त्रेश्वरि सर्वयोगीश्वरि सर्वजगदुत्पत्तिमातृके सर्वविद्यामयि महाभैरवि कवलीकृतसर्वतत्त्वात्मिके बिन्दुसर्वात्मिके महाश्रीत्रिपुरसुन्दरि नमः. ऐंईंश्रौं. ऊँऐंह्रींऐं ऐंह्रींश्रींश्रौं नमः शिवाय नमः शिवायै ॥ इति प्रस्तारसहस्राक्षरी ॥

अथावरणसहस्राक्षरी । ऊँऐंह्रींश्रीं हंसः ऊँ नमो भगवति अक्षोभ्ये रूक्षकर्णे राक्षसिपक्षत्रणे क्षपे

---

१ 'क्लीं' क. पाठ । २ 'रक्ष' घ पाठ । ३ 'हम' ग. पाठ. । ४ 'हस' ग पाठ. । ५ हस' ग पाठ । ६ 'हस' ग. पाठ 'हसकहर' क पाठ. । ७ 'रडर' क पाठ. । ८ 'रडर' क पाठ । ९ 'रडर' क पाठ. । १० 'रडर' क. पाठ । ११ 'कसकह्रीं' क पाठ. ।

पिङ्गलाक्षि अरुणे क्षये लीले लोले ललिते लूने लुलिते लम्बिके लट्टेश्वरि लासे विमले हुताशनि विशालाक्षि हुङ्कारे वडवामुखि महारवे महाक्रोडक्रोधिनि खरास्ये सर्वज्ञे तरले तारे दृष्टिहृष्टे रेणुकन्धरे मारकि रससंग्राहिणि तालजङ्घे करङ्किणि मेघनादे प्रचण्डोग्रे कालकर्णि वरप्रदे चण्डे चण्डवति प्रचण्डे प्रलयान्तकि पितृवक्त्रे पिशाचाक्षि पिशुनि लोलुपे वानति वानरि धमनि विकटास्ये वायुवेगे बृहत्कुक्षिविकृते विश्वरूपिणि यमजिह्वे जये दुर्जये यमान्तकि बिडालेश्वरि पूतने विजये अनन्ते नन्दिनि चण्डि रेवति (सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशङ्करि) सर्वोन्मादिनि सर्वमहाङ्कुशे खेचरि (सर्वबीजधारिणि) सर्वबीजरूपे महायोनिरूपे त्रिखण्डे, अनङ्गब्राह्मि अनङ्गमाहेश्वरि अनङ्गकौमारि अनङ्गवैष्णवि अनङ्गवाराहि अनङ्गइन्द्राणि अनङ्गचामुण्डे अनङ्गमहालक्ष्मि प्रकटयोगिनीशि चार्वाकदर्शनाङ्गि त्रैलोक्यमोहनचक्रस्वामिनि, कामाकर्षिणि (बुद्ध्याकर्षिणि अहङ्काराकर्षिणि शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिणि आत्माकर्षिणि) अमृताकर्षिणि शरीराकर्षिणि गुप्तयोगिनीशि बौद्धदर्शनाङ्गि सर्वाशापूरकचक्रस्वामिनि, अनङ्गकुसुमे अनङ्गमेखले अनङ्गमदने अनङ्गमदनातुरे अनङ्गरेखे अनङ्गवेगिनि अनङ्गाङ्कुशे अनङ्गमालिनि अतिगुप्तयोगिनीशि रौद्रदर्शनाङ्गि सर्वसंक्षोभणचक्रस्वामिनि पूर्वाम्नायेशि सृष्टिप्रदे, सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तम्भिनि सर्वजृम्भिणि सर्ववशङ्करि सर्वरञ्जनि सर्वोन्मादिनि सर्वार्थसाधनि सर्वसम्पत्प्रपूरिणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयङ्करि सम्प्रदाययोगिनीशि सर्वदर्शनाङ्गि सर्वसौभाग्यदायकचक्रस्वामिनि, सर्वसिद्धिप्रदे सर्वसम्पत्प्रदे सर्वप्रियङ्करि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि कुलकौलयोगिनीशि सर्वार्थसाधकचक्रस्वामिनि, सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदायिनि सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपे सर्वेप्सितफलप्रदे निगर्भयोगिनीशि सर्वरक्षाकरचक्रस्वामिनि दक्षिणाम्नायेशि स्थितिप्रदे, ब्लूं वशिनि कलह्रीं कामेशि न्ब्लूं मोदिनि य्लूं विमले ज्म्रीं अरुणे ह्सलवयूं जयिनि झ्मरयूं सर्वेश्वरि क्ष्म्रीं कौलिनि रहस्ययोगिनीशि शाक्तदर्शनाङ्गि सर्वरोगहरचक्रस्वामिनि, द्रां क्लिन्ने मोहनकामबाण द्रीं शोषणकामबाण क्लीं नित्य-सन्दीपनकामबाण ब्लूं मद-सन्तापनकामबाण सः द्रव उन्मादनकामबाण द्रांद्रींक्लींब्लूंसः जम्भिनि जम्भय २ मोहिनि मोहय २ आं आकर्षिणि आकर्षय २ स्तंभिनि स्तंभय २ ऐं कामेशि क्लीं वज्रेशि सौः भगमाले अतिरहस्ययोगिनीशि सर्वसिद्धिमयचक्रस्वामिनि, कामराजविद्यामहात्रिपुरसुन्दरीमाल परापररहस्ययोगिनीशि सौगतदर्शनाङ्गि सर्वानन्दमयचक्रस्वामिनि पश्चिमाम्नायेशि अंआंसौः त्रिपुरे ऐंक्लींसौः त्रिपुरेश्वरि ह्रींक्लींसौः त्रिपुरसुन्दरि हैं ह्क्लींह्सौः त्रिपुरवासिनि ह्सैंह्स्क्लींह्सौः त्रिपुराश्रि ह्रींक्लींब्लें त्रिपुरमालिनि ह्रींश्रींसौः त्रिपुरासिद्धे ह्स्रैं ह्सक्लरीं ह्स्रौः त्रिपुराम्बे ह्सकलरडैं ह्सकलरडीं ह्सकलरडौः महात्रिपुरभैरवि अं कामेशि आं भगमाले इं नित्यक्लिन्ने ईं भेरुण्डे उं वह्निवासिनि ऊं महावज्रेश्वरि ऋं शिवदूति ॠं त्वरिते लृं कुलसुन्दरि लॄं नित्ये एं नीलपताके ऐं विजये ओं सर्वमङ्गले औं ज्वालामालिनि अं विचित्रे अः कामेश्वरि विद्यामालिनि[1] अकुले कुलाकुलमहाकुले सर्वोत्तरपञ्चार्थज्ञानप्रदे सर्वदर्शनाङ्गमयि सर्वदर्शनोत्तीर्णस्वरूपिणि सर्वाध्वशोधनि कालकालेशशरण्ये नवाक्षरि बालविद्या षोडशाधिका च नवकूटद्वयं महदग्[2]सौः आनन्देश्वरि घोरकालिनि अम्बाश्रीपादुकां पूजयामि ह्स[3]श्रींह्रीं ॥ इत्यावृत्तिसहस्रार्णविद्या त्रैलोक्यपूजिता ॥ कुलार्णवे—

अथाभिधास्ये सर्वेषां नित्ययागविधिक्रमम् । साधकानां च सिद्धानां दीक्षितानां शिवागमे ॥ १ ॥
दीक्षितास्त्रिविधाः प्रोक्ता उत्तमाधममध्यमाः । तत्रोत्तमस्य नास्त्येष्टिः सर्वोत्तीर्णात् स्वदर्शनात् ॥ २ ॥

---

१ 'सदृश' ख पाठ । २ 'माले' ग. पाठ । ३ 'सहस्रमयूं' ग. पाठ ।

अधमस्यापि नान्त्येष्टिर्मोचिका मामयं जगत् । पारिशेष्यादथान्त्येष्टिर्मध्यमस्येति नः स्थितिः ॥ ३ ॥
अथवा श्रद्धया कुर्यात् सर्वेषामुत्तमो गुरुः । स्यात्मशुद्ध्यर्थमेकत्र " रूपयैव ...... " हि (?) ॥ ४ ॥
साक्षात् करन्ध्रमध्येन ब्रह्मरन्ध्रविनिर्गतः । उत्तमो मध्यमस्तास्यश्रोत्रनासादिमार्गतः ॥ ५ ॥
अधमः पायुलिङ्गाभ्यां केवलं नारकी हि सः । पैशाचलोकमाप्नोति पायुमार्गविनिर्गतः ॥ ६ ॥
आस्येन देवलोकस्थो नासया नरलोकभाक् । श्रोत्रेण पितृलोकः स्याद् देवलोकस्तु चक्षुषा ॥ ७ ॥
करन्ध्रेण शिवस्थानमिति लोकस्य निर्णयः । मृतानां कृपयान्त्येष्टिः कर्तव्या देशिकेन तु ॥ ८ ॥
परीक्ष्य कालं विधिवद् देशिको मृत्युहात् पुरा । सप्ताहे वाथ पञ्चाहे त्र्यहे वाथ कुशार्पणम् ॥ ९ ॥
विधाय गात्रमानीय भैरवान् योगिनीस्तथा । समभ्यर्च्य गुरुं पश्चादीशानं योगविष्टरे ॥ १० ॥
कृत्वा च प्रणतिं सम्यक् पुष्पाञ्जलिपुरःसरम् । इति विज्ञापयेद् दीनो जानुभ्यामवनीं गतः ॥ ११ ॥
देवदेव महादेव करुणालय शङ्कर । नित्यानन्द निराधार निराकुल निरञ्जन ॥ १२ ॥
आज्ञया तव देवेशि सिद्ध्यत्येव ममेप्सितम् । तथापि शिव सर्वज्ञ यानि दुश्चरितानि मे ॥ १३ ॥
प्रमादादथवा ज्ञानात् तानि सर्वाणि सर्वदा । क्षमस्व परमेशान दासोऽहं तव चाव्यय ॥ १४ ॥
इति विज्ञाप्य गुरवे दिव्यागमपुरःसरम् । स्वार्जितद्रव्यजातं यत्तत् सर्वं विनिवेदयेत् ॥ १५ ॥
त्वदाज्ञयार्जिता ह्येते त्वदर्थे विनियोजिताः । इत्युक्त्वा प्रणमेद् भूयो गुरुभक्तिपरायणः ॥ १६ ॥
गुरौ व्याप्ते प्रतिष्ठाप्य पादुकां तस्य पीठतः । समभ्यर्च्य यथान्यायं सर्वं तत्र समाचरेत् ॥ १७ ॥
पुत्रशिष्यादिभिः कार्यं कारयित्वा विचक्षणः । स्वयं कर्तुमशक्तश्चेत् सर्वदा तद्दिने पुनः ॥ १८ ॥
तत्प्रसादं महायत्नात् स्वीकर्तव्यं मनीषिभिः । अवशिष्टं तु यद्वस्तु चतुर्धा च विभज्य तत् ॥ १९ ॥
औरसाय स्वपुत्राय दद्याद्भागद्वयं पुनः । गोत्रिभ्य एकमेकं तु स्वस्यान्त्येष्ट्यर्थमादिशेत् ॥ २० ॥
श्रीचक्रं पूजयेत् तावद्यावत् पञ्चत्वमाप्नुयात् । उत्क्रान्तिकाले तत्कर्णे जपेत् तद्गुरुपादुकाम् ॥ २१ ॥
चरणत्रयमन्त्रं च वदेच्चैवमथो गुरुः । तत्तत्समयनिष्ठानां तत्तन्मन्त्रं जपेद्गुरुः ॥ २२ ॥
यस्मिन् निष्ठा परा तस्य तत्कर्णे सर्वथा जपेत् । अनुसन्धानबाहुल्यात् तत्र चित्तलयो भवेत् ॥ २३ ॥
श्रीभूतिराजलब्धानि श्रीशम्भुवदनाम्बुजात् । वाक्यानि ब्रह्मविद्यायाः प्रणवैः पुटितानि च ॥ २४ ॥
अथोच्यते ब्रह्मविद्या सद्यः प्रत्ययकारिका । शिवः श्रीभूतिराजो यां सुविद्या न्यवेदयत् ॥ २५ ॥
सर्वेषामेव भूतानां मरणे समुपस्थिते । यया पठितयोत्क्रम्य जीवो याति निरञ्जनम् ॥ २६ ॥
या ज्ञानिनोऽपि संपूर्णकृत्यस्यापि श्रुता सती । प्राणविच्छेदजां मृत्युव्यथां सद्यो व्यपोहति ॥ २७ ॥
यामाकर्ण्य महामोहविवशोऽपि क्रमागतः । प्रबोधं वस्तुसामुख्यमभ्येति रभसात् स्वयम् ॥ २८ ॥
तारो माया वेदकलो मातृवारो नवात्मकः । प्रतिवाक्यं यदाद्यन्ते योजिता परिपठ्यते ॥ २९ ॥
ॐह्रींहूं फ्रें हसक्षमलवरयूं इति निष्कलब्रह्मविद्या ।

---

१ 'ॐह्रीं हसखफ्रें अ हसक्षमलवरयूं' क ख. ग पाठ ।

एतां तु वक्ष्यमाणेषु आद्यन्ते विनियोजयेत् । .................................... ॥

ॐह्रींहं फ्रें हसक्षमलवरयूं ।

परमपदात् त्वमिहागाः सनातनस्त्वं जहिहि देहान्तम् ।
पादाङ्गुष्ठादि विभो निरन्धन बन्धन क्षुग्रम् । हसक्षमलवरयूं फ्रेंहंह्रींओं ॥ १ ॥

ॐ गुल्फान्ते जानुगतं जत्रुस्थं बन्धनं तथा मेढ्रे ।
जहिहि पुरमुग्रमध्यं हृत्पद्मात् त्वं समुत्तिष्ठ ॐ ॥ २ ॥

ॐ हंस हयग्रीव विभो सदाशिवस्त्व परोऽसि जीवाख्यः ।
रविसोमवह्निसंघट्ट बिन्दु देव हहह समुत्क्राम ॐ ॥ ३ ॥

ॐ हसमहामन्त्रमयः सनातनस्त्वं शुभाशुभोपेक्षी ।
मण्डलमध्यनिविष्टः शक्तिमहासेतुकारणमहार्थः ।
कमलोभयनिविष्टः प्रबोधमायाहि देवतादेव ॐ ॥ ४ ॥

ॐ अज्ञानात् त्वं बद्धः प्रबोधितोत्तिष्ठ देवादे ॐ ॥ ५ ॥

ॐ व्रज तालुमाहयान्त ह्यौडुम्बरघट्टितं महाद्वारम् ।
भाष्य प्रयाहि हंहो हहो वा वामदेव पदम् ॐ ॥ ६ ॥ -

ॐ ग्रन्थीश्वर परमात्मन् सान्त महातालुरन्ध्रमासाद्य ।
उत्क्राम हे देहेश्वर निरञ्जन शिवपदं प्रयाह्याशु ॐ ॥ ७ ॥

ॐ आक्रम्य मध्यमार्गं प्राणापानौ समाहृत्य ।
धर्माधर्मौ त्यक्त्वा नारायण प्रयाहि शान्तान्तम् ॐ ॥ ८ ॥

ॐ हे ब्रह्मन् हे विष्णो हे रुद्र शिवोऽसि वासुदेवस्त्वम् ।
अग्नीषोम सनातन मृत्पिण्ड जहिहि हे महाकाश ॐ ॥ ९ ॥

ॐ अङ्गुष्ठमात्रमलमावरणं जहिहि हे महासूक्ष्म ॐ ॥ १० ॥

ॐ पुरुषस्त्व प्रकृतिमयैर्बद्धोऽहङ्कारतन्तुना बन्धैः ।
अभवाभव नित्योदित परमात्मंस्त्यज सरागमध्वानम् ॐ ॥ ११ ॥

ॐ ह्रींहूं-मन्त्रशरीरमविलम्बमाशु त्यजेहि देहान्तम् ॐ ॥ १२ ॥

ॐ वदिद गुणभूतमय त्यज स्व षाट्कौशिक पिण्डम् ॐ ॥ १३ ॥

ॐ मा देहं भूतमय प्रगृह्णता शाश्वत महादेहम् ॐ ॥ १४ ॥

ॐ मण्डलममलमनन्तं त्रिधा स्थितं गच्छ भित्त्वैतत् ॐ ॥ १५ ॥

इति श्रीब्रह्मविद्या ।

ज्ञात चेत् स्वयमेवामून् नियम्य प्रजपेत् तदा । अन्यथा शृणुयाद्वापि तदेकाग्रमना भवेत् ॥ १ ॥

निर्वाणविद्यानिरतो निर्वाणपदभाग्भवेत् । शुद्धतन्त्रिस्तथान्त्येष्टिकर्ता स शिवसप्रुतः ॥ २ ॥
स्नात्वा सम्यगलंकृत्य नित्यकृत्यं यथाविधि । विद्यापानन्दसंपूर्णः कृत्वा न्यासादिकं तनौ ॥ ३ ॥
अभिमन्त्र्य जलं पश्चात् पञ्चप्रणवैर्गुरुस्त्रितः । पिण्डं संशोधयेद्विद्वानथ चामरपञ्चके ॥ ४ ॥
अपरा दीपिनीमुक्त्वा ज्वालामालिन्यनन्तरम् । व्योमषष्ठस्वरार्धेन्दुहसफडन्तको मनुः ॥ ५ ॥
मायाबीजान्तिकः मोक्षः शोधकः सर्वदेहिनाम् । आकृष्य स्थापयेत् प्रेतपिण्डे तु गुरुत्वात्स्यतः ॥ ६ ॥
ऐंह्रीं हसखफ्रें ऋं हसक्षमलवरयूं ऐं दीपिनी, ज्वालामालिनी । हसः फट् ह्रीं हसक्षमलवरयूं हसखफ्रें ह्रीं ऐं । इति दीपिन्यादिविधिः ।
एवं विशोधिते देहे शक्तिचालनयोगतः । नेत्ररन्ध्रादिमार्गेण लोकोत्तरविनिर्मि(र्ग)तः ॥ ७ ॥
त्रिपद्धतिमृन्त्वान्तं बिन्दुमुच्चार्य मोक्षदे । चक्षुरादिपदान्ते तु प्रेतनाम तथोच्चरेत् ॥ ८ ॥
आवाहयामीत्यनेन सपञ्चप्रणवेन वै । . . . . . . . . . . . ॥
ऐं हंः मोक्षदे चक्षुरादयवयवान्तमावाहयामि ऐं ।
मन्त्रेणावाहयेत् प्रेतं सर्गादिभ्यो निराकुलम् । अमुष्येत्यादिमन्त्रेण प्रतिष्ठाप्य समीरणम् ॥ ९ ॥
अहं संकल्पयेत् पश्चान्मायापड्दीर्घजातिभिः । एकसूत्राभिसंवीतं सविष्ठाप्य घटं पुनः ॥ १० ॥
अभ्यर्च्योक्तेन मार्गेण पिण्डं संस्थापयेत्ततः । आदाय पूजिता पद्या (चाथो) वार्धानीमत्स्वरूपिणीम् ॥ ११ ॥
सर्वतीर्थमनुं स्मृत्वा तत्तोयैरभिषेचयेत् । भस्मस्नानं ततः कुर्यात् परमेष्ठिमनुं स्मरेत् ॥ १२ ॥
पिण्डं दक्षिणमूर्धानं न्यस्तं दर्भान्तरे पुनः । नववस्त्रस्रगालेपैरलंकृत्याथ भूषणैः ॥ १३ ॥
तस्मिन् पिण्डे न्यसेत् पश्चान्मन्त्रराजमशेषतः । अभ्यर्च्य क्रममुद्वास्य समाप्ति गुरुपादुकाम् ॥ १४ ॥
सम्यग्विमानं संकल्प्य संस्थाप्य तं विचक्षणः । ग्रामं प्रदक्षिणीकृत्य शङ्खभेर्यादिभिःस्वनैः ॥ १५ ॥
प्रेतस्थानं प्रविश्याथ दक्षिणोत्तरमायताम् । उपलिप्य समां भूमिं लाजाक्षततिलानपि ॥ १६ ॥
विकीर्य सर्षपान् प्रोक्ष्य विमानं तत्र विन्यसेत् । संस्थाप्य तत्र चित्याग्निं परिस्तीर्य विलोमतः ॥ १७ ॥
पात्राण्यासाद्य विधिवद् दक्षिणे विष्णुदेवतम् । प्रणीतापात्रमासाद्य संपूज्य कुसुमादिभिः ॥ १८ ॥
दर्भैराच्छादितं धीमान् वह्निकोणे प्रविन्यसेत् । दक्षभागे यजेद् देवं भैरवं मण्डले क्रमात् ॥ १९ ॥
पूर्वोक्तेन विधानेन कृत्वा जिह्वादिकल्पनाम् । तिलतण्डुलसंमिश्रं पायसं चरुकं पुनः ॥ २० ॥
मृत्युञ्जयेन संमन्त्र्य पञ्चश्लोकैर्विशेषतः । साज्येन चरुणा पश्चात् पञ्चरत्नैर्विशेषतः ॥ २१ ॥
ब्रह्माण्यां न्याससंप्रोक्तैः स्वाहान्तैः सुसमाहितः । मूलविद्याद्वयं जप्त्वा प्रत्येकं सप्तसप्तकम् ॥ २२ ॥
हुनेत् क्रमात् सावरणं विलोमेन विधानतः । एवं विलोमतो होमान्न्यस्तमन्त्रान् गुरोस्तनौ ॥ २३ ॥
क्रमेण विलयं कुर्यात् सूक्ष्मपुर्यष्टकात्मनि । हुत्वा वाग्भवमन्त्रेण स्वाहान्तेन विचक्षणः ॥ २४ ॥
क्रमेण विलयं कुर्यात् सूक्ष्मपुर्यष्टकात्मनि । इष्टिं संन्यासिना कुर्यात् क्रमेण व्याप्तिभाजनम् ॥ २५ ॥
पुनश्च विद्यया हुत्वा ततस्तत्त्वलयात्मिकाम् । तत्रार्धे शेषं संयोज्य सर्वमात्मनि योजयेत् ॥ २६ ॥
ततस्तत्त्वानि सूक्ष्माणि विलोमेन विधानतः । नाशयेत् कर्म शिष्यस्य भयभञ्जिणिहोमतः ॥ २७ ॥
सूक्ष्मरूपेणात्मगतपुण्यपापे सदा ह्ययम् ।
ऐं सटंकमखधरयूं हुं फट् शिशो. सर्व पुण्यपापानां नाशयामि स्वाहा ऐं ।

एवं स्थूलक्रमं हुत्वा सूक्ष्मलीनं विभावयेत् । विलोमेन क्रमेणात्र सूक्ष्मं चापि परं तथा ॥ २९ ॥
एवं विभौ समायोज्यं शिष्यं क्षीणमलत्रयम् । पूर्णाहुतिप्रयोगेण योजयेत् परमे पदे ॥ ३० ॥
शिवशक्त्यात्मके शुद्धे पुनरावृत्तिवर्जिते । संवित्सुखमये साक्षात् तत्त्वातीते निजे पदे ॥ ३१ ॥
इति संयोजिते साक्षाद् गुरुणा परमे पदे । मत्यज्य मलकालुष्यं शुभं वा चावकल्पके (?) ॥ ३२ ॥
आज्येन जुहुयात् पञ्चश्लोकैस्तत्त्वैरघोरतः । अनुलोमविधानेन प्रायश्चित्ताय चास्तिकः ॥ ३३ ॥
देहमानेन शिष्यस्य शयनं परिकल्पयेत् । वहिर्दक्षिणदिग्भागे कुलवृक्षसमुद्भवैः ॥ ३४ ॥
शङ्कुभिर्दक्षिणावर्तसमिद्भिर्नाथ पिङ्गलैः । दर्भैश्च शयनं कृत्वा त्रिगुणीकृत्य तन्तुना ॥ ३५ ॥
नवकृत्वो वेष्टयित्वा चन्दनागुरुपूर्वकैः । कृत्वा चितिं पुनः काष्ठैर्नवसूत्रेण वेष्टयेत् ॥ ३६ ॥
पद्मं त्रिकोणषट्कोणकर्णिकं साष्टपत्रकम् । सद्विरेख विधायात्र पुष्पाणि विनिमार्य च ॥ ३७ ॥
प्रेतं दक्षिणमूर्धानं विन्यस्य जिह्वदृष्टिकः । रक्षा मन्त्रेण सकल्प्य ज्वालामालिनिविद्यया ॥ ३८ ॥
प्रज्वाल्याघोरमन्त्रेण तथा पाशुपतेन वा । यावद्भस्मीभवत्येतत् तावद्धोमो विधीयते ॥ ३९ ॥
आप्ता ये गोत्रिणस्तत्र सर्वत्र च समागताः । स्तोत्रं मन्त्रजपं कुर्युः प्रयुतायुतकर्मणा ॥ ४० ॥
विभाव्य क्रमतः प्रेत भक्षितं योगिनीगणैः[1] । विद्याद्वयजपं कुर्यान्निश्चलेनान्तरात्मना ॥ ४१ ॥
स्तुत्वा पश्चाद्यथाशास्त्रं स्वक्रमं सम्यगर्चयेत् । रक्षयेच्च चितावह्निं यावदस्थिसमुच्चयम् ॥ ४२ ॥
दिवसे सप्तमे वह्निं घृतेन पयसाथवा । निर्वाप्यास्थीनि पादाद्यं नवधा मस्तकावधि ॥ ४३ ॥
क्रमात् संगृह्य निःक्षिप्य पात्रे संवेष्ट्य वाससा । नवेन भस्म प्रक्षिप्य नद्यां तोयालयेऽपि वा ॥ ४४ ॥
देवमातृगृहे वाथ स्वगृहे चास्थिभाजनम् । खात्वा निधाय तस्योर्ध्वैर्मेखलात्रयसंयुतम् ॥ ४५ ॥
पीठं सकल्प्य शिष्यो वा कनिष्ठोऽणुविधानवित् । त्रिसंध्यमर्चयेत् पीठे विधिवद्गुरुमण्डलम् ॥ ४६ ॥
एकादशे दिने कृत्वा सायमुत्सवमास्तिकः । सम्यक्पात्र प्रतिष्ठाप्य हेतुनापूर्य सादरम् ॥ ४७ ॥
स्वर्णरत्नादिकं तत्र विनिःक्षिप्य यथाबलम् । समयाचारसंपन्नं नित्यपूजापरायणम् ॥ ४८ ॥
योग्यं मान्त्रिकमानीय सपूज्यास्मै निवेदयेत् । पर्वपूजा मृताहेऽपि प्रतिमासं समाचरेत् ॥ ४९ ॥
संपूर्णे वत्सरे कुर्यान्महोत्सवमतन्द्रितः । अस्थिभाजनमुद्धृत्य पश्चाद् देशिकपुङ्गवः ॥ ५० ॥
नद्यां समुद्रगामिन्यां निक्षिपेन्निखनेत् तु वा । नदीतीरेऽथवान्यत्र तत्र वृक्षान् प्ररोपयेत् ॥ ५१ ॥
अथवा प्रतिमां वापि कृत्वा शिल्पिभिरन्वितः । पादुकां वा शुभे देशे सुलग्ने सुमुहूर्तके ॥ ५२ ॥
पूर्वोक्तेन विधानेन संयोज्य परमे पदे । भावयेन्मनसा पश्चात् शम्भुत्वं तस्य चान्तिके[3] ॥ ५३ ॥
ये केचित् पशुमार्गस्था गुप्ताचाराः कुलागमे । तेषामपि मृते कुर्याद् दर्भैः पञ्चाशता गुरुः ॥ ५४ ॥
विधाय कूर्चमावाह्य तत्र प्रेतं विधानतः । पूर्वोक्तेन विधानेन तत्र सर्वं समाचरेत् ॥ ५५ ॥
जोपयेदन्यशिष्याणामन्यथा कृपया गुरुः । कुर्याद्वा तेन प्रतिमामन्त्येष्टिं कुलशासने ॥ ५६ ॥

१ 'विधौ' ख पाठ. । २ 'योगिना गणैः' ग. पाठ. । ३ 'निवार्य' ग. पाठ । ४ 'चास्तिकः' क पाठ. ।

सर्वलक्षणसंपन्नं शालिपिष्टमयं शुभम् । देहं कृत्वा समावाह्य शिष्यात्मानं विधानतः ॥ ५७ ॥
तस्मिन् पिण्डे न्यसेत् पूर्वं मंत्रं पूर्ववदेव तु । पश्चाद्विलोममार्गेण हुत्वा स्थूलक्रमं बुधः ॥ ५८ ॥
परे क्रमे निवेश्याथ पिण्डं पिष्टमयं ततः । स्रुचि निःक्षिप्य जुहुयात् स्रुवेणाज्याद्य देशिकः ॥ ५९ ॥
पूर्णाहुतिप्रयोगेण मायार्णेन पञ्चभिः । गुरुमुद्दिश्य कर्तव्या शिष्यैर्हुतिभिरेव वा ॥ ६० ॥
अन्त्येष्टिः सर्वदा कार्या मृतानाममृतेन तु । साक्षात् शाम्भवसिद्धानामन्त्ययोगो विधीयते ॥ ६१ ॥
तथापि कुर्यात् सिद्धार्थमात्मनः सर्वमास्तिकः । अथवा मनसा कुर्यादेकान्ते स्वयमास्तिकः ॥ ६२ ॥
मानसं परमुत्कृष्टं योगिनामपि न स्थितिः । तस्मात् सर्वप्रयत्नेन मानसं क्रममाचरेत् ॥ ६३ ॥
इत्यन्त्येष्टिविधिः ॥

श्रीनाथाग्निसरोजकल्पक्रमहाशास्त्रैकनानाखिल-
श्रीमत्तन्त्रकदम्बकाकलनतो विद्यार्णवाख्यं परम् ।
विद्यारण्ययतिश्चकार सुमहत् तन्त्रं सतां प्रीतये
श्रीविद्यानगरेऽस्य देवनृपतौ सत्प्रीतितः शासति ॥

इति श्रीमद्दामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगवच्छंकराचार्यशिष्य-
श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते
श्रीविद्यार्णवाख्ये तन्त्रे षट्त्रिंशत्तम. श्वास ॥ ३६ ॥

समाप्तोऽयं श्रीविद्यार्णवः । शुभमस्तु पाठकोपासकेभ्यः ।

---

१ 'पूर्वमन्त्रे' ख पाठः । २ 'चरणाचार्यदेशिकः' ख पाठ. । ३ 'गुरु सदिश्य' ख पाठ । ४ 'शालैकतानोऽखिल' ख पाठ ।

"अदृश्यभावान्मतिविभ्रमत्वात्पदार्थहीनं लिखितं मयात्र । तत्सर्वमार्यै परिशोधनीयं कोपं न कुर्युः खलु लेखकस्य ॥ संवत् १७८२ श्रावणः ।" इति मूलपुस्तकस्यान्तिमपत्रे लिपिकृतोऽयं श्लोक. कालायुक्तश्च ।